आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०३

सच्चिदानन्दयोगीन्द्रकृततत्त्वदीपिकाऽऽख्यासमेतं

# श्रुतिसारसमुद्धरणम् ।

एतत्पुस्तकं

परमहंस केवलानन्दस्वामिभिः ( वे० शा० सं० नारायण-
शास्त्री मराठे ) इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५८ ।

खिस्ताब्दाः १९३६ ।



मूल्यं षोडशाणकाः ( ९१२ ) ।

# श्रीशंकरदेशिकाष्टकम् ।

विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं भव शंकर देशिक मे शरणम् ॥ १ ॥
करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम् ।
रचयाखिलदर्शनतत्त्वविदं भव शंकर देशिक मे शरणम् ॥ २ ॥
भवता जनता सुहिता भविता निजबोधविचारणचारुमते ।
कलयेश्वरजीवविवेकविदं भव शंकर देशिक मे शरणम् ॥ ३ ॥
भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता ।
मम वारय मोहमहाजलधिं भव शंकर देशिक मे शरणम् ॥ ४ ॥
सुकृतेऽधिकृते बहुधा भवतो भविता पददर्शनलालसता ।
अतिदीनमिमं परिपालय मां भव शंकर देशिक मे शरणम् ॥ ५ ॥
जगतीमवितुं कलिताकृतयो विचरन्ति महामहसश्छलतः ।
अहिमांशुरिवात्र विभासि पुरो भव शंकर देशिक मे शरणम् ॥ ६ ॥
गुरुपुंगवपुङ्गवकेतन ते समतामयतां नहि कोऽपि सुधीः ।
शरणागतवत्सल तत्त्वनिधे भव शंकर देशिक मे शरणम् ॥ ७ ॥
विदिता न मया विशदैककला नच किंचन काञ्चनमस्ति गुरो ।
द्रुतमेव विधेहि कृपां सहजां भव शंकर देशिक मे शरणम् ॥ ८ ॥

इति श्रीमत्तोटकाचार्यविरचितं शंकरदेशिकाष्टकं संपूर्णम् ।

# श्रुतिसारसमुद्धरणविषयानुक्रमणिका ।



# प्रास्ताविकं किंचित् ।

श्रीभगवत्पूज्यपादेषु नितान्तं श्रद्धधानः कश्चिद्ब्राह्मणबटुर्गिरिनामा श्रीगुरुचरणान् सेवमान आसीत् । स चानाघ्रातशास्त्रगन्धोऽपि साक्षाच्छंकरभगवतः श्रीमुखात्प्रवहद्भाष्यप्रवचनं श्रद्धया चैकाग्रतया चाक्षरादक्षरमप्यत्यजन्नशृणोत् । तस्मिंश्चाचार्यकृपा समजनि । तथा हि-कदाचिदुषस्युत्थाय भगवन्तं ध्यात्वा पूर्वकृतमद्य कर्तव्यं च विचिन्त्य शरीरशुद्धिपूर्वकं स्नानादि निर्वर्त्य प्रणवमुपास्योपनिषदमावर्त्य यावत् साक्षाज्जगद्गुरुभिरेव स्वप्रणीतं शारीरकभाष्यं विविच्यमानं श्रोतुकामाः पद्मपादादयो महापण्डिताः पदवाक्यप्रमाणपारावारपारीणा उपतिष्ठन्ते तावत् पूर्वोक्तः सोऽनासादितपाण्डित्यक्लेशः श्रद्धालुर्गिरिनामा बटुः किंचिद्गुरुशाटीप्रक्षालनकार्येण चिरयति स्म । पाठारम्भकालं च प्राप्तं मत्वा संजातपाण्डित्यदर्पः पद्मपाद आचार्यचरणान् 'आरब्धव्यः पाठः' इति सूचयांबभूव । आचार्यस्तु 'स्थीयतां गिरिरपि क्षणमात्रादेष्यति' इति समुदीरयति स्म । शास्त्रानभिज्ञोऽसौ गभीरभाष्यार्थमाकलयितुमसमर्थ इति तदनागमोऽपि न पाठारम्भं प्रतिबध्नातीत्युवाच दर्पितः पण्डितप्रकाण्डः पद्मपादः । आचार्यचरणास्तु तदवगम्य कथमपि दर्पोऽस्य परिहरणीय एवेति विचार्य तूष्णीमेवाऽऽसांचक्रिरे । नातिचिरेणैव च स गिरिरागत्य प्रत्यहमिव साष्टाङ्गं प्रणिपत्य स्वस्थाने तिष्ठन्नेव साञ्जलिबन्धमुच्चैः " विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे । हृदये कलये विमलं चरणं भव शंकर देशिक मे शरणम् " इत्यादिकामष्टश्लोकीं तोटकवृत्तेन सद्यः स्वरचितां पपाठ पुनः पुनः प्रणनाम च । आचार्याज्ञया चोपविश्याऽऽचार्यचरणैर्विविच्यमानं भाष्यपाठं शुश्राव । पाठान्ते च यत् किंचिदद्ययावत् त्वयोपनिषदर्थजातं श्रुतं तत्संक्षेपेणोच्यतामिति भगवत्पादैराज्ञापिते सद्य एव श्रुतिसारसमुद्धरणं नाम प्रकरणं तोटकवृत्तेनैव विरचय्य पपाठ । तदेतद् दृष्ट्वा सर्वे पद्मपादादयो विगलितदर्पाः 'आचार्यकृपाविलसितमेवैतत् , धन्यश्चायमस्मत्तोऽप्याचार्यकृपापात्रम्' इति निश्चित्य क्षमापय्य गुरुचरणान् समनन्तरमाह्निकं साधयामासुरिति ।

पाठकमहाशयाः 'तदेतदेव श्रुतिसारसमुद्धरणं नाम प्रकरणमाचार्यकृपाप्रसादपात्रात्तोटकाचार्यापरनाम्नो गिरेः सकाशात् प्रकाशतां प्राप्तं तत्रभवत्सु निवेद्यते

संप्रति । यद्यपि नात्र तथाविधं पाण्डित्यं यत् किलाऽभ्यस्तन्यायमीमांसाव्याकरणानां पण्डितानां मनसो वादकण्डूसमाधानाय प्रभवेत् । तथाऽपि ननु विनयवशंवदानां प्रमोदास्पदमेवैतत् प्रकरणं भगवत्पूज्यपादप्रसादलब्धत्वादिति नास्ति संदेहलेशोऽप्यस्माकम् । अत एव च निवेद्यते भवत्सु । नचेदमद्यापि क्वचिन्मुद्रितमिति विश्वसिमः ।

अत्र प्रकरणे श्लोका एकोनाशीतिसमधिकशतसंख्याकाः । तत्र प्रथमो मङ्गलश्लोको वसन्ततिलका । अन्तिमौ च स्रग्धरे । मध्यमाश्चावशिष्टाः सर्वे तोटकम् । ‘ तोटकं सः ’ इति जगतीजातौ वर्तमानस्य तोटकस्य लक्षणं वेदाङ्गे छन्दोविचितौ ।

इदमेव च तोटकं नाम च्छन्दोनाम प्रकृतप्रकरणकर्तुर्गिरेः ‘ तोटकाचार्यः ’ इतिनामसंपादकम् । तत आरभ्यैव तादृशनाम्नः प्रसिद्धत्वात् । तथैव च पद्मपादादिभिः स्वीकारात् । यद्धि किलाऽऽचार्यशंकरप्रसादात्पूर्वोक्तेन वटुना गिरिणा शंकरदेशिकाष्टकं नाम प्रार्थनारूपं प्रकरणं प्रथमतस्तोटकवृत्तेन पठितं पश्चाच्चाऽऽचार्याज्ञयैवेदं महाप्रकरणं तोटकवृत्तेनैव घटितं पठितं तत एव कौतुकाच्छ्रीगुरुणा ‘ तोटकोऽयम् ’ इत्युक्ते गुरुबन्धुभिरपि ‘तोटकाचार्योऽयम् ’ इति संबोधितम् ।

शंकरदेशिकाष्टकं च परस्तादत्रैव पाठकमहाशयकृते मुद्राप्यत एव । तट्टीका तु नोपलब्धा । प्रकृतस्य महाप्रकरणस्य च नामधेयं ‘ श्रुतिसारसमुद्धरणम् ’ इति १७५ संख्याके पद्ये स्वयमेव तोटकाचार्येणोक्तं—‘ गुरुशिष्यकथाश्रवणेन मया श्रुतिवच्छ्रुतिसारसमुद्धरणम् । कृतमित्थमवैति य एवदसौ न पतत्युदधौ मृतिजन्मजले ॥’ इति । अस्य प्रकरणस्योपान्त्यश्लोक इत्थम्—

येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसंतानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताः शिष्यसंघाः
सद्योमुक्ताः स्थितास्तान्यतिपरमहितान् यावदायुर्नमामि ॥

भगवत्पूज्यपादप्रणीतमाण्डूक्यभाष्यान्ते वर्तमानो गुरुनमस्करणश्लोकश्चेत्थम्—

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् स्वान्तमोहान्धकारो
मज्जोन्मज्जंश्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।

यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥

उभावप्येतौ श्लोकौ स्रग्धरावृत्तघटितौ । तत्रापि च श्रीमदाचार्य-श्लोकं शब्दतोऽर्थतश्चानुकरोति तोटकाचार्यश्लोकः ।

श्रीमदाचार्यपूज्यपादकृपापात्रतोटकाचार्यप्रणीतमिदमेव तत् प्रकरण-मित्यत्र प्रमाणं तु साक्षादत्र ग्रन्थे न किंचिद्विशेषत उपलभ्यते । किंतु तोटकवृत्तघटितं प्रकरणं, अन्ते च भाष्यकारश्लोकानुकारी श्लोक इत्ये-तद् द्वयमेव कथंकथमपि तत्र लिङ्गम् । तथाप्रसिद्धिस्तु तत्र विशेषतः प्रमाणम् । 'इदमेव तत् प्रकरणं यत् किल तोटकाचार्येण व्यरचि' इति प्रसिद्धिश्च प्रबलं प्रमाणं इति नास्ति संशयः । माधवीये शांकर-दिग्विजये द्वादशसर्गीयः श्लोकोऽयं पञ्चाशीतितमो यथा—

अद्यापि तत्प्रकरणं प्रथितं पृथिव्यां तत्संज्ञया लघु महार्थमनल्पनीति ।
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं वेदान्तवेद्यपरतत्त्वनिवेदनं यत् ॥ इति ।

अत्रेदमवधेयम्— शांकरदिग्विजयटीकायामद्वैतराज्यलक्ष्मीनामधे-यायामुदाहृतश्लोकस्थं 'लघु' पदमेवं व्याख्यातम्—'पञ्चश्लोकात्मक-त्वाल्लघुत्वम्' इति । तेन ज्ञायते तोटकाचार्यप्रणीतं यत्प्रकरणं तत्केवलं पञ्चश्लोकात्मकमेवेति ।

अथ के ते पञ्च श्लोका इत्यपेक्षायां दिग्विजयद्वादशसर्गीयाष्टसप्तति-तमश्लोकटीकायां डिण्डिमाख्यायां ते श्लोका उदाहृताः । तेषां प्रतीकानि त्वेवम्—भगवन्नुदधौ० विनिवर्त्य० विसृज० जलभेदकृता० दिन-कृत्प्रभया० इति । एते च पञ्च श्लोकाः प्रकृतग्रन्थे चतुर्थमारभ्य द्रष्ट-व्याः । तत्र कियांश्चित्पाठभेदो दृश्यते यथा—

| प्रकृतग्रन्थपाठः | शां० टीकापाठः |
|---|---|
| ५ भ्रममात्ममतेः | १ भ्रममात्ममते |
| ६ अनन्तमृतम् | २ अनन्तमजम् |
| ८ जनचित्तरतम् | ४ जनचित्तगतम् |
| ८ यत एवमतोऽसित एव सदा | ६ यत एव मतोऽसि सदेव सदा । |

इति । अस्माभिस्तु प्रकृतग्रन्थपाठ एव स्वीकृतः प्रकृतग्रन्थटीका-कारेण तथैव व्याख्यातत्वात् । किंच शांकरदिग्विजयपुस्तक आनन्दा-श्रममुद्रितेऽधष्टिप्पण्यां लिखितम्— 'अग्रिमं पद्यद्वयं 'घ' पुस्तके भगवन्नुदधावित्यादिश्लोकपञ्चकात्प्रागधिकं दृश्यते' इति । तच्च पद्य-

द्वयं तत्रैव दर्शितम् ‘ सकलं मनसा० प्रतिपित्सु० ’ इति । तच्च पद्य-द्वयं प्रकृतग्रन्थे द्वितीयतृतीयश्लोकौ द्रष्टव्यौ । तत्रापि पुनः प्रकृतग्रन्थ-दिग्विजयटिप्पण्योः पाठभेदो यथा—

| प्रकृते | टिप्पण्याम् |
|---|---|
| २ अविनाशि कृतेन न लभ्यमिति | १ अविनाशिकृते यतितव्यमिति |
| ३ विदितात्मसतत्त्वमुपेत्य कविम् | २ विदितात्मकलं समुपेत्यकविः |

इति । अत्रापि प्रकृत एव पाठोऽस्माभिरङ्गीकृतस्तथैव तोटकटीकाकारे-र्व्याख्यातत्वात् ।

अत्र चैवं ध्येयम्—यद्यप्यद्वैतराज्यलक्ष्मीकारेण पञ्चैव श्लोका-स्तोटकाचार्येण कृता इत्युक्तं तथाऽपि शांकरदिग्विजयस्य डिण्डिमा-ख्यटीकाकारेण प्राचीनेन ‘ भगवन्नुदधौ० ’ इत्यादीन् पञ्च श्लोकान् प्रागुक्तानुदाहृत्य ‘इत्यादिभिः—तोटकवृत्तैः ’ इत्युक्तम् । तत्र पञ्च-श्लोकोक्त्यनन्तरमादिशब्दप्रयोगेण स्पष्टमेव ज्ञापितं यन्न केवलं पञ्चैव श्लोकास्तोटकाचार्येण कृताः किंतु ये केचिच्छ्लोकास्तैः कृतास्तेषामेते केवलमाद्यभूताः पञ्च श्लोका इति । तथा च लक्ष्मीकारस्य मतं तोट-काचार्येण पञ्चैव श्लोकाः कृता इति, डिण्डिमकारस्य तु मतं तोटका-चार्येण भूयांसः श्लोकाः कृता न केवलं पञ्चैवेति ।

अस्य श्रुतिसारसमुद्धरणाख्यप्रकरणस्य श्रीतोटकाचार्यप्रणीतस्य टीका तत्त्वदीपिका नाम । सा च न केवलं पञ्चस्वेव सप्तस्वेव वा श्लोकेषु किंतु नवसप्तत्यधिकशतसंख्येष्वेव श्लोकेषु विद्यते । तेनापि ज्ञायते यदेतत्सर्वमेव प्रकरणं १७९ श्लोकात्मकं तोटकाचार्यकृतमिति ।

टीका चेयं श्रीमत्पूर्णात्मयोगीन्द्रशिष्येण सच्चिदानन्दयोगीन्द्रेण र-चिता । तदुक्तं तेनैव—

अतिमन्दमुमुक्षूणां तत्त्वयोगप्रसिद्धये ।
तोटकश्लोकटीकेयं रचिता तत्त्वदीपिका ॥

इति श्रीपूर्णात्मयोगीन्द्रशिष्यसच्चिदानन्दयोगीन्द्रेण रचिता
तत्त्वदीपिकाख्या तोटकवृत्तिः समाप्ता ॥ इति ।

यदेतत्सटीकमूलपुस्तकं लब्धमस्माभिस्तत्किल शके १७६७ विभावसुनामसंवत्सरे वैशाखे मासे शुक्लपक्षे द्वादश्यां रवौ लेखने समापितम् । अर्थात्ततः प्राचीनेयं टीकेति स्पष्टमेव । नातोऽधिकं टीकाकारविषये ज्ञायतेऽस्माभिः ; टीका चेयं यद्यपि न पाण्डित्यप्रचुरा

तथाऽपि यथाश्रुतमूलार्थाविष्करणं सम्यक्करोतीति मुमुक्षूणां मन्दानामुपयुक्तैव । उक्तं च टीकाकृतैव 'अतिमन्दमुमुक्षूणामिति'। इदं च मन्दत्वं मुमुक्षूणां न मुमुक्षायां किंतु शास्त्रीयपाण्डित्य इत्यवगन्तव्यम् ।

अथ विचारणीयाः केचिद्विशेषा उपन्यस्यन्ते । यथा—

१– प्रकृतग्रन्थ एकपञ्चाशत्तमे श्लोके 'विभयं पुरुषं प्रवदन्ति यथा मृगराडयमीश्वरगुप्त इति' इत्युक्तम् । 'अयमीश्वरगुप्तो मृगराट्' इति गौणेन मृगराट्पदेनेश्वरगुप्तस्य निर्भयत्वं प्रतिपाद्यत इति तदर्थः । सोऽयमीश्वरगुप्तो नाम राजा तोटकाचार्यकाले वर्तमानो वा तदनन्तरपूर्वो वा स्यादिति स्वीकारो न दोषाय । ईश्वरगुप्तश्चायं 'ईश्वरगुप्तः' इति नाम्ना नोपलभ्यते । 'ईश्वरवर्मा' इति तु कश्चिद्गुप्तकुलवर्त्युपलभ्यते । स च ख्रैस्तीयषष्ठशतकपूर्वार्धे सिंहासनमध्युवास । तस्मान्नायमीश्वरगुप्तो भिन्न एवेति नो मतिः । ईश्वरगुप्तश्चायं सेनापतिर्वा तादृशोऽन्यो वा कश्चिच्छूरो वीरः साहसी युवा स्यात् । यः सिंह इवेति । नातोऽधिकं वयमत्र विचारयितुं प्रभवामः ।

२– षडधिकशततमः श्लोको—

द्रविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेव निरूपितवान् ।
शबरेण विवर्धितराजशिशोर्निजजन्मविदुक्तिनिदर्शनतः ॥

इति शबरविवर्धितस्य राजपुत्रस्य दृष्टान्तेन तत्त्वमसि वाक्यमविद्यानिवर्तकमेवेति द्रविडाचार्यो निरूपितवानिति संमतिरूपेण तोटकाचार्य उदाहृतवान् । तत्र कोऽयं द्रविड इति प्रश्ने तोटकटीकाकारेणोक्तं—द्रविडाचार्यश्चोपदेशसाहस्र्याम् "श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये" इत्यादिना....निरूपितवानिति । उपदेशसाहस्र्यां पद्यग्रन्थेऽष्टादशे तत्त्वमसिप्रकरणे नवनवतितमश्लोकस्योत्तरार्धे 'श्रुतिस्तत्त्वमसीत्याह' इत्यादि । एतेन च तोटकटीकाकारवाक्येन स्पष्टमेव ज्ञायते यदुपदेशसाहस्रीनाम यद्गद्यपद्यात्मकं प्रकरणं तन्न भाष्यकारैः श्रीमच्छंकराचार्यैः प्रणीतं, किंतु केनचिदन्येनैव द्रविडाचार्येणेति । तथा चोपदेशसाहस्री भाष्यकारैरेव प्रणीतेति वेदान्तानुयायिषु जनेषु पण्डितेषु ग्रन्थकारेषु च या प्रसिद्धिः सा सर्वाऽपि भ्रान्तिरेवेति सिध्यति । नच विद्वज्जनप्रसिद्ध्या रामतीर्थादिग्रन्थकारोक्त्यनुसारेण च तोटकटीकाकारोक्तिरेव भ्रान्तिरिति स्वीका-

र्थमिति भाष्यम् । श्वेताश्वतरोपनिषद्भाष्यान्ते तद्भाष्यकारेणोक्तत्वा-त् । एतच्च बहुधा प्रपञ्चितमुपदेशसाहस्रिकायामित्यत्र संकोचः कृत इति । तत्र च पूर्वं शिष्यं परीक्ष्यैव विद्या वक्तव्येति प्रकृतम् । एतच्छिष्यपरीक्षणावश्यकत्वं बहुधा प्रपञ्चितम् । क १ उपदेशसाहस्रिकायाम् । तत्र प्रपञ्चितत्वात् । अत्र श्वेताश्वतरभाष्ये संकोचः कृतः संक्षेपेणैवोक्तमिति । तच्च शिष्यपरीक्षाप्रपञ्चनं गद्यात्मकोपदेशसहस्रिकाभागे प्रथमत एव विद्यत इति । तेन स्पष्टमेव सिद्धं भवति, यच्छ्वेताश्वतरोपनिषद्भाष्यकारेणैवोपदेशसाहस्री प्रणीतेति । ननु तथाऽपि श्वेताश्वरोपानिषद्भाष्यमेवाऽऽचार्यभगवत्पूज्यपादप्रणीतमिति स्वीकारे न दोष इति चेत्, अत्र प्रतिविहितं पुण्यपत्तनस्थानन्दाश्रमस्थैः शास्त्रिभिः श्वेताश्वतरोपनिषत्प्रस्तावे यथा— यद्यप्यस्युपनिषद्भाष्यपुस्तकान्ते शंकराचार्यविरचितमित्युपलभ्यते तथाऽप्येतन्न तत्कृतमिति निश्चीयते । १ शांकरदिग्विजये टीकायां शंकराचार्यकृतभाष्यनामनिर्देशसमये श्वेताश्वतरभाष्यनामानिर्देशात् । २ मूल एव च नृसिंहतापनीयमुल्लिख्यापि श्वेताश्वतरानुल्लेखात् । ३ केनादीनां नारायणकृतदीपिकासु तत्तद्भाष्यस्थवाक्यानां बाहुल्येनोपलम्भेऽपि श्वेताश्वतरदीपिकायां तादृशस्यैकस्याप्यभावात् । ४ तत्तन्नारायणकृतदीपिकान्ते 'नारायणेन रचिता शंकरोक्त्युपजीविना ' इत्युक्तत्वेऽपि श्वेताश्वतरे ' नारायणेन रचिता श्रुतिमात्रोपजीविना ' इत्याहत्योक्तत्वात् । ५ श्वेताश्वतरदीपिकायां ' अयमर्थ आचार्यसंमतः ' इत्युक्त्वा गीताशांकरभाष्यस्योदाहृतत्वात्, विद्यमानत्वे च श्वेताश्वतरशांकरभाष्यस्य गीताशांकरभाष्योदाहृते रसांगत्यात्, ६ विद्यमानश्वेताश्वतरभाष्ये च शांकरभाष्यगुणशून्यत्वाच्चेति ।

आनन्दाश्रमशास्त्रिमहाशयोक्तेरयं निष्कर्षोऽस्माभिरिहोद्धृतः । विस्तरभयात्तु तत्रत्यमक्षरश उदाहर्तुं न पार्यते ।

सर्वथाऽपि तु श्वेताश्वतरोपनिषद्भाष्यं नाम यदुपलभ्यते मुद्रितं चाऽऽनन्दाश्रमे तन्नैव शारीरकमीमांसाभाष्यकृता श्रीमच्छंकराचार्येण प्रणीतमिति । तथा च दण्डापूपायितेनैवेतत्सिध्याति यदुपदेशसाहस्री नैव श्रीमदाचार्यकृता किंतु श्वेताश्वतरोपनिषद्भाष्यकृता केनचिदन्येनैवाचार्येणेति । स एव च द्रविडाचार्यो नाम तोटकटीकाकारेणोल्लिखितः स्यात् ।

३ यद्यपि तोटकटीकाकाराद्यनुसारेण न भाष्यकारप्रणीतोपदेशसा-

हस्रीति सिध्यति तथाऽपि साक्षात्तोटकोल्लिखितो द्रविडो नोपदेश-साहस्रीकर्ता भवितुमर्हति। अन्यो हि द्रविडष्टीकाकारोक्त उपदेशसाह-स्रीकर्ताऽन्यश्च साक्षात्तोटकोक्तो द्रविडः। तथा हि——तोटकाचार्यः 'द्राविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेव निरूपितवान्' (१०६) इत्युक्त्वा पुनरुवाच 'शबरेण विवर्धितराजशिशोर्निजजन्मविदुक्तिनि-दर्शनतः' इति। परंतु निखिलायां गद्यात्मिकायां पद्यात्मिकायां चोप-देशसाहस्र्यां क्वापि शबरविवर्धितराजशिशुनिदर्शनं गवेषितमपि नैवोप-लभ्यते। 'श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये' इति श्लोकार्धानन्त-रमुपदेशसाहस्रिकायां गद्यभागेऽष्टादशे प्रकरणे 'ब्रह्मा दाशरथेर्यद्वदुक्त्यै-वापानुदत्तमः। तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान्॥ १८। १००॥' इति दाशरथिदृष्टान्त एवोपलभ्यते। स चायं दाशरथिवृ-त्तान्तोऽध्यात्मरामायण उत्तरकाण्डेऽष्टमे सर्गे वाल्मीकिरामायणे चोत्तरकाण्डे १०४ सर्गे वर्णितः। स चायं रामायणगतो वृत्तान्तः संक्षे-पशारीरकेऽपि द्वितीयेऽध्याये १८२ श्लोके संगृहीत एव। परंतु संक्षेप-शारीरके——तत्त्वमसिवाक्यं विनिवर्तकमिति न प्रकृतं नापि प्रकरिष्य-माणम्। सर्वथाऽपि तोटकाचार्येणोपदेशसाहस्री न स्पृष्टा।

तथा च पुनः संशयकल्लोलैर्लोलायते चेतः कोऽयं द्रविडो यस्तोट-काचार्येणोल्लिखितो येन शबरविवर्धितराजशिशुदृष्टान्त उक्तः।

उपदेशसाहस्रीस्मरणप्रसङ्गादिदमप्येकं विचारणीयम्——साहस्रीगद्य-प्रकरणे प्रथमे तृतीयश्लोकमारभ्य पञ्चविंशश्लोकपर्यन्तमध्यात्मरामा-यणोत्तरकाण्डस्थरामगीताश्लोकानामेव केषांचित्केवलवृत्तान्तरकरणं दृश्यते। शब्दाश्चार्थाश्च त एवोभयत्र। स्पष्टतायै किंचिदुदाह्रियते। रामगीतायाम्——

क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः।
धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः॥ ८॥
अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते।
विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितम्॥ ९॥
नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत्।
ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत्॥
॥ १०॥ इति।

अथोपदेशसाहस्रिकायाम्—

कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये
ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ १।३ ॥
धर्माधर्मौ ततोऽज्ञस्य देहयोगस्तथा पुनः ।
एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥
अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ।
ब्रह्मविद्याऽत आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥
विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः ।
नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥
रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ।
तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥ इति ॥

ततश्च स्पष्टमेवेत्तिसिध्यति यदन्यतरदन्यतरस्यानुकृतिरिति । तत्र त्रयं संभाव्यते—रामगीतायाः साहस्र्याश्च कर्ता एक एव स्यात् । किंवा रामगीता साहस्रीमनुवदति । अथवा साहस्रीमेव रामगीताऽनुवदतीति । तत्र द्वितीयैव कल्पना सुसुखं कर्तुम् । ततश्चाध्यात्मरामायणोत्तरमुपदेशसाहस्र्या जन्म श्वेताश्वतरभाष्यस्य चेति सिद्धं भवति । सोऽयं तर्कः सम्यगन्वेति विचारका विदांकुर्वन्तु ।

सर्वथाऽपि श्रीमद्भगवत्पूज्यपादकृपालेशतो लब्धमिदं श्रुतिसारसमुद्धरणं नाम तोटकाचार्यप्रणीतं प्रकरणं प्रकाशनाय सज्जीकुर्वतां मनःसमाधानमेव नितान्तमस्माकं लाभ इति । तदिदमन्येभ्योऽपि सौमनस्यं दद्यादिति शम् ।

सटीकमिदं पुस्तकं यस्मान्मूलपुस्तकात्संशोधितं तत्किल पुस्तकमेवाद्वितीयमासीत् । तच्च पुस्तकं संगमपाहुलीस्थश्रीमच्छिवानन्दसरस्वतीस्वामिभ्यो लब्धमिति सादरं निर्देष्टव्यमत्रेति कर्तव्यमेव मन्यामहे ।

वाचकेभ्यश्चेदमन्यन्निवेदनीयं यत्प्रथमपृष्ठे तृतीयपङ्क्तौ, चतुर्विंशतितमपृष्ठपर्यन्तं सर्वेषु विषमपृष्ठेषु शीर्षके 'श्रुतिसमुद्धरणम्' इति ग्रन्थनाम प्रमादात्पातितं तत्तु 'श्रुतिसारसमुद्धरणम्' इति द्रष्टव्यमिति ।

स्वामी केवलानन्दः ।
वाई जि. सातारा.

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीतोटकाचार्यविरचितं

# श्रुतिसमुद्धरणम् ।

सच्चिदानन्दयोगीन्द्रकृततत्त्वदीपिकाव्याख्यासमेतम् ।

---

त्रैलोक्यनाथहरिमीड्यमुदारसत्त्वं
शाक्तेस्तनूजतनयं परमेष्ठिकल्पम् ।
जीमूतमुक्तविमलाम्बरचारुवर्णं
वासिष्ठमुग्रतपसं प्रणतोऽस्मि नित्यम् ॥ १ ॥

( तत्त्वदीपिका— )

विलसच्चितिबलतः स्फुरदखिलः स्वकतमसा ।
परिनिर्मितविपुलद्वयविहितस्वकमहिमा ॥
व्यवहारकवपुषा विधिवचनादिकविषयो ।
मम मानसनिलयो हरिरवताज्जगदखिलम् ॥ १ ॥
श्रीकृष्णं प्रत्यगात्मानं भक्त्या नत्वा गुरूनपि ।
टीकामहं करिष्यामि तोटकश्लोकगामिनीम् ॥ २ ॥

तत्र त्रैलोक्यनाथहरिमीड्यमित्यादिनाऽऽद्यश्लोकेनेष्टदेवतागुरुनमस्कारव्याजेन प्रारिप्सितस्य प्रकरणस्य विषयसंबन्धप्रयोजनानि सूचयति । प्रकरणं नाम शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे चावस्थितं तल्लक्षणज्ञैरुच्यते ।

शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥

इति स्मरणात् । ‘ एकप्रयोजनप्रतिबद्धार्थजातस्य कार्त्स्न्येन प्रतिपादको ग्रन्थः शास्त्रम् ’ इतीह शास्त्रलक्षणम् । शारीरकशास्त्रैकदेशसंबद्धं चेदं प्रकरणं श्रुतिसारसमुद्धरणाख्यम् । निर्गुणब्रह्मात्मैक्यप्रतिबद्धासाधारणन्यायमात्रप्रतिपादकत्वात् । समन्वयाविरोधसाधनफलार्थचतुष्टयप्रतिपादकत्वे सत्यपि शास्त्रकार्यान्तरावस्थितत्वमप्यस्यास्त्येव । अनेन शास्त्रार्थस्य संक्षेपतः प्रदर्शनात् । ततश्चास्यापि तदीयैरेव विषयसंबन्धप्रयोजनैर्विषयसंबन्धप्रयोजनवत्त्वोपपत्तिः ।

ननु किमनेन पृथग्विषयसंबन्धप्रयोजनोपन्यासेन । सत्यमेतत् । तथाऽपि श्रोतॄणां प्रवृत्त्यर्थतया शारीरशास्त्रसंबद्धान्येव विषयसंबन्धप्रयोजनानि प्रकरणारम्भसमये स्मार-

यतीत्यदोषः। स्थिते चैवमाद्यश्लोकस्य विषयादिकथनतात्पर्ये शङ्कोत्तरत्वेनायं श्लोकोऽवतारयितव्य इति शङ्का प्रदर्श्यते। ननु नेदं प्रकरणमारब्धव्यम्। विषयसंबन्धप्रयोजनाभावात्। तदभावश्च ब्रह्मणः प्रसिद्धत्वेऽप्रसिद्धत्वे च तदसंभवात्। तथा हि—यदि ब्रह्म वेदान्तशास्त्रमन्तरेणान्यतः प्रसिद्धं तदा नास्य विषयः। यो हि येनावगम्यते स तस्य विषयो भवति। यथा चक्षुरादीनां रूपादयः। अनन्यसाधारणो हि विषय इति। अथ ब्रह्म प्रमाणमन्तरेणाप्रसिद्धं तथा सति न तदगगनकुसुमादिवच्छास्त्रेण प्रतिपादयितुं शक्यम्। तथा हि—यत् कदाचिदपि बुद्ध्यावसमारूढविशेषं कथं तत्परं प्रति शास्त्रेण प्रतिपाद्यते। अशक्यप्रतिपादनत्वाच्छास्त्रस्य ब्रह्मणा सह संबन्धाभावः। अयोगव्यवच्छेदो हि संबन्धः। यो हि येनावगम्यते न चान्येनावगम्यते तस्य तेन संबन्धो भवति। यथा व्याकरणेन शब्दसाधुत्वमवगम्यत इति तेन संबन्धः। न चैवं वेदान्तशास्त्रेण ब्रह्मावगम्यते। तस्यात्यन्तमप्रसिद्धेः। अशक्यप्रतिपादनत्वात्। तस्मादप्रसिद्धत्वे संबन्धाभावः। विषयसंबन्धाभावे च प्रयोजनाभावः प्रसिद्ध एव भवति तस्य तन्नियतत्वादिति।

अत्रोच्यते—स्यादयमुपालम्भो यद्येकान्ततो ब्रह्मणः प्रसिद्ध्यप्रसिद्धी स्याताम्। न तु ते स्तः। तथा हि—ब्रह्मादिपदेभ्यो लोकतश्च ब्रह्मणः प्रसिद्धत्वान्नात्यन्तमप्रसिद्धिरस्ति। ब्रह्मशब्दो हि बृहत्यर्थान्वयेन वर्तमानो देशतः कालतो वस्तुतश्चानवच्छिन्नं वस्तु व्यवस्थापयति। तथा लोकेऽपि 'अहम्' इति प्रत्यगात्मप्रसिद्धिः। तस्य च परमार्थतो ब्रह्मत्वान्नैकान्ततोऽप्रसिद्धिर्ब्रह्मणः। नाप्येकान्ततः प्रसिद्धिः। प्रमाणतोऽप्रसिद्धेः। नहि पदतो लोकतश्च प्रसिद्धिः 'प्रमाणतः प्रसिद्धिः' भवति। पदस्य स्मारकत्वाल्लोकाख्यसप्तमप्रमाणानभ्युपगमाच्च। तस्मादेकान्ततः प्रसिद्ध्यभावाद्ब्रह्मणो विषयत्वोपपत्तिः। अप्रसिद्ध्यभावाच्च संबन्धोपपत्तिः। विषयसंबन्धोपपत्तेश्च प्रयोजनोपपत्तिरिति। तदाह—त्रैलोक्येति। तत्र त्रैलोक्यमित्याकाशादिः प्रपञ्चो विवक्ष्यते छत्रिन्यायेन। तस्य नाथः साभासमात्माज्ञानं, तत्प्रसूतो हि प्रपञ्चस्तन्नियन्ता चेति त्रैलोक्यनाथः। हरतीति हरिः। त्रैलोक्यनाथो हरिः त्रैलोक्यनाथहरिः। 'वाक्यजनितबुद्ध्युपारूढः प्रत्यगात्माज्ञाननिवर्तकः' इति वाक्यार्थज्ञानादज्ञाननिवृत्तिः प्रकरणस्य प्रयोजनमुक्तं भवति।

ननु "हरतेर्दृतिनाथयोः पशौ" इति स्मरणात्पशावेव दृतिहरिः, नाथहरिः इति रूपसिद्धिर्भवति न तु पुरुषेऽपश्वात्मनि, इति त्रैलोक्यनाथहरिरितिव्याख्यानमसद् व्याख्यानमिति। तत्र केचिदाहुः—'चतुष्पात्' 'अष्टाशफम्' 'षोडशकलम्' ब्रह्मेति श्रुतेः परमात्मनोऽपि पुरुषस्य पशुत्वरूपकल्पनया

पशुत्वोपपत्तेस्त्रैलोक्यनाथं हरतीति ङगुत्पत्त्या त्रैलोक्यनाथहरिरिति निर्देशो भवत्येव " इति । तदयुक्तम् । क्लिष्टकल्पनाप्रसङ्गात् । तस्मात्त्रैलोक्यनाथश्चासौ हरिश्चेति समासः । स्वाज्ञानप्रतिबिम्बितकूटस्थचैतन्यपरमात्मा त्रैलोक्यनाथः । तस्य कारणत्वान्नियन्तृत्वाच्च त्रैलोक्यनाथ इत्युच्यते । स एव वाक्योत्थबुद्धिवृत्तिफलकोपारूढचैतन्यरूपो हरणात् 'हरिः' इत्युच्यते । कस्य हरणादित्यपेक्षायां तस्यैवाज्ञानस्य, इत्यर्थाल्लभ्यते । अतश्च त्रैलोक्यमनर्थं, तद्धेतुरात्माज्ञानं, पुरुषार्थोऽज्ञाननिवृत्तिः, तद्धेतुरात्मज्ञानं, इत्यनर्थतद्धेतुपुरुषार्थतद्धेतवः सूचिता भवन्तीति लाभान्तरमिति । इड्यं स्तुत्यं प्रतिपाद्यमिति वेदान्तशास्त्रस्य प्रत्यगात्मनश्च प्रतिपाद्यप्रतिपादकलक्षणः संबन्धः, विषयश्चानन्यसाधारणतया निर्दिष्टो भवति । एवमस्य प्रकरणारम्भापेक्षितविषयसंबन्धप्रयोजनकथनतात्पर्यमुपवर्णितम् ।

इदानीमक्षरयोजना । त्रैलोक्यनाथहरिं प्रणतोऽस्मीति संबन्धः । कथंभूतमिति विशेषणापेक्षायामन्यत्सर्वं संबध्यते । ईड्यं स्तुत्यं वेदान्तैरेव प्रतिपाद्यमित्यन्ययोगव्यवच्छेदेन विषयनिर्देशः, तथा वेदान्तैः प्रतिपाद्यमेवेत्ययोगव्यवच्छेदेन संबन्धनिर्देशोऽप्यत्रैव द्रष्टव्यः । उदारसत्त्वमुदारमुत्कृष्टं सत्त्वं सत्त्वकार्यं ज्ञानमन्तःकरणपरिणामरूपं लक्ष्यते । तच्चान्तःकरणपरिणामरूपं ज्ञानं स्वरूपज्ञानव्याप्यं भवतीति सत्त्वशब्देन लक्षितलक्षणान्यायेन स्वरूपज्ञानं लक्ष्यते । तेनोदारसत्त्वमुदारचैतन्यमित्यर्थः । तदस्येति व्यपदेशिवद्भावेन बहुव्रीहिः । तमुदारसत्त्वम् । शक्तेस्तनूजतनयं शक्तिर्मायाशक्तिस्तत्कार्यमेवास्य कार्यमिति तत्तनूजतनयम् । परमेष्ठिकल्पं परमेष्ठिनं हिरण्यगर्भं कल्पयति सृजतीति परमेष्ठिकल्पस्तं विरिञ्चिप्रमुखानामपि कारणत्वेन सर्वोत्कृष्टमित्यर्थः । यदि सर्वकारणत्वेन सर्वोत्कृष्टत्वमुच्यते तर्हि 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति न्यायात्कारणत्वेन सविकारत्वं प्राप्तम् । तथा सति नित्यमुक्तत्वं कथं घटत इति शङ्कां वियद्दृष्टान्तेन निरस्यति । जीमूतेति । जीमूतैर्मेघैर्मुक्तं च तद्विमलाम्बरं चेति जीमूतमुक्तविमलाम्बरं तद्वच्चारुः शोभनो वर्णः स्वरूपमस्येति तथोक्तः । यथाऽम्बरं मेघादौ सत्यसति च निरवयवत्वादसङ्गं निष्क्रियं च तद्वदयमपि निःसङ्गो निष्क्रियश्चेत्यर्थः । ननु तथाऽपि 'तत्सृष्ट्वा । तदेवानुप्राविशत् ।' 'नान्योऽतोऽस्ति द्रष्टा' तत्त्वमसि' इत्यादिश्रुतजीवपरयोरभेदश्रवणाज्जीवात्मनश्च कर्तृत्वभोक्तृत्वादिप्रसिद्धेः पुनरप्यात्मनः सविकारत्वं तदवस्थमित्याशङ्क्याऽऽत्मनः कर्तृत्वादेरन्तःकरणोपाधिनिमित्तत्वान्मैवमित्याह । वासिष्ठमिति । वसत्यस्मिन्निति वासः शरीरं, वासोऽस्यास्तीति वासी जीवः । तस्मिन्नन्तर्यामित्वेनाविद्यावस्थायां तिष्ठतीति वासिष्ठस्तम् ।

प्रमिकमिव्यसंनिधिमात्रेण सकलकार्यकरणसंघातप्रवर्तकत्वान्निर्विकारत्वमुपपन्न-मित्यर्थः। उदारसत्त्वमित्यत्र सूचितं विज्ञानघनत्वं स्पष्टयति—उग्रतपसमिति। उग्रमुत्कृष्टमप्रतिहतं तपो ज्ञानमस्येत्युग्रतपास्तमुग्रतपसम्। 'यस्य ज्ञानमयं तपः' इति श्रुतेः प्रज्ञानघनमित्यर्थः। एवंभूतं त्रैलोक्यनाथहरिं नित्यं प्रणतोऽस्मीति देवतानमस्कारपक्षे योजना। गुरुनमस्कारपक्षे त्वयमर्थः—वसिष्ठस्यापत्यं गोत्रं वासिष्ठः पाराशर्यस्तं वेदव्यासं सूत्रकर्तारं त्रैलोक्यनाथहरिम्। 'व्यासो नारायणः साक्षाच्छंकरः शंकरः स्वयम्' इति पुराणप्रसिद्धत्वात्त्रैलोक्यनाथहरिर्व्यासः। उदारसत्त्वं सत्त्वगुणविशिष्टम्। उग्रमुत्कृष्टं तपः पर्यालोचनमस्येत्युग्रतपास्तं सर्वज्ञमित्यर्थः। शक्तेस्तनूजस्य पराशरस्य तनयम्। परमेष्ठिसमानम्। जीमूतमुक्तविमलाम्बरचारुवर्णं श्यामतनुमित्यर्थः। अथवा त्रैलोक्यनाथहरिमीड्यं प्रणतोऽस्मीति देवतानमस्कारः, शिष्टेन गुरुनमस्कार इति केचित्॥ १॥

सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितया तु जगत्।
निरविद्यत कश्चिदतो निखिलादविनाशि कृतेन न लभ्यमिति॥ २॥

एवमाद्यश्लोकेन प्रकरणारम्भापेक्षितविषयसंबन्धप्रयोजनान्यभिधाय, इदानीम्—

'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥

इत्युपनिषद्वाक्यमवष्टभ्य नित्यानित्यविवेकादिसाधनचतुष्टयसंपन्नं ब्रह्मविद्याधिकारिणं साधयति। सकलमिति। क्रियया जनितं चतुर्विधेन कर्मणा साधितं जगत्सकलं मनसा समवेक्ष्य सकलं क्षणिकमिति निश्चित्य कश्चित् सुकृतिः पुमानाखिलादाविरिञ्चात्स्थावरान्निरविद्यत निर्वेदं गतवान्। अविनाशीति। कृतेनानुष्ठितेन कर्मणाऽविनाशि विनाशरहितं फलं न लभ्यमिति यस्मात्तस्मात्कारणात्कर्मफले तत्साधने च वैराग्यं गतवानित्यर्थः॥ २॥

प्रतिपित्सुरसावविनाशि पदं यतिधर्मरतो यतिमेव गुरुम्।
विदितात्मसतत्त्वमुपेत्य कविं प्रणिपत्य निवेदितवान्स्वमतम्॥ ३॥

साधनसाध्यासर्वस्माद्विरक्तोऽधिकारी किं कृतवानित्याकाङ्क्षायामाह—प्रतिपित्सुरिति। पद्यते ज्ञायत इति पदं, अविनाशि पदं प्रतिपित्सुर्विनाशरहितमात्मस्वरूपं बुभुत्सुः, असावधिकारी यतिधर्मरतः संन्यासिनां धर्मेषु रतः सन्, विदितात्मसतत्त्वं विदितमात्मनः सतत्त्वं स्वरूपं येन तं, यतिं यमनशीलं क्रोधादिरहितं,

कवि क्रान्तदर्शिनं सर्वज्ञं गुरुमुपेत्य गुरुसमीपं गत्वा प्रणिपत्य स्वमतं निवेदितवा-न्स्वाभिप्रायं विज्ञापितवानित्यर्थः ॥ ३ ॥

भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥ ४ ॥

किं पुनस्तत्स्वमतमित्याकाङ्क्षायां स्वमतं दर्शयति—भगवन्निति । हे भगवन्ष-ड्गुणैश्वर्यसंपन्न मृतिजन्मजले सुखदुःखझषे संसारोदधौ पतितमत एव व्यथितं दुःखितमनन्यगतिं शरणागतं त्वत्पादकमलमुपसन्नं कृपयैवोद्धर संसाराब्धिं तार-येत्यर्थः ॥ ४ ॥

विनिवर्त्य रतिं विषये विषमां परिमुच्य शरीरनिबद्धमतिम् ।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममतेः ॥ ५ ॥

एवं शिष्याभिप्रायं श्रुतवान्गुरुरिदानीं तमनुशास्ति—विनिवर्त्येत्यादि । विषये रतिं विनिवर्त्य विषयाभिमुखां चित्तवृत्तिं प्रत्याहृत्य । कथंभूताम् । विषमामुच्चाव-चां सुरनरतिर्यगादिनानाप्राप्तिहेतुभूतां शरीरनिबद्धमतिं परिमुच्य देहादिष्वा-त्मबुद्धिं परित्यज्य तदनन्तरं परमात्मपदे नित्यं रतो भवानवरतं प्रत्यक्प्रवणो भूत्वा श्रवणादिनिष्ठो भवेत्यर्थः । तर्हि केन साधनेन मिथ्याज्ञानस्य परिमोचनमिति तत्राऽऽह—आत्ममतेरिति । आत्मज्ञानेन मोहमयमविद्याकार्यभ्रमं देहेन्द्रियादि-ष्वात्ममतिमात्मबुद्धिं जहीत्यर्थः ॥ ५ ॥

विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिं सततम् ।
दृशिरूपमनन्तमृतं त्रिगुणं हृदयस्थमवेहि सदाऽहमिति ॥ ६ ॥

यथोक्तमेवार्थं प्रपञ्चयति । विसृजेति । अन्नमयादिष्वन्नमयप्राणमयमनोमय-विज्ञानमयानन्दमयेषु पञ्चसु कोशेष्वात्मनः परिच्छिन्नत्तिहेतुभूतेष्वहं ममेति मतिं सततं विसृज । अन्नमयादिष्वात्मबुद्धिमात्मीयबुद्धिं च परित्यज । पश्चाद्दृशिरूपं ज्ञानस्वरूपं, अनन्तं देशतः कालतो वस्तुतश्चानवच्छिन्नं, ऋतं सत्यमबाध्यं, त्रिगुणं गुणत्रयातीतं तदेव हृदयस्थं बुद्धिसाक्षितया स्थितं यद् ब्रह्म तदेवाहमस्मीति सदाऽ-वेहि जानीहि । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्द आत्मा' 'अयमात्मा ब्रह्म' 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुत्यनुसारेण 'अहमेव ब्रह्म' इत्यवगच्छेत्यर्थः ॥ ६ ॥

जलभेदकृता बहुतेव रवेर्घटिकादिकृता नभसोऽपि यथा ।
मतिभेदकृता तु तथा बहुता तव बुद्धिदृशोऽविकृतस्य सदा ॥ ७ ॥

ननु दृशिरूपममन्तमिति ब्रह्मणो यदानन्त्यमुक्तं तदनुपपन्नम् । ब्रह्मण आत्मत्वात् । आत्मनश्च प्रतिशरीरं जन्ममरणप्रतिनियमादिलिङ्गानुमितभेदत्वात् , लोकतश्च 'त्वम्' 'अहम्' इत्यादिभेदप्रसिद्धेरित्याशङ्क्य प्रतिनियमादिलिङ्गस्य व्यधिकरणत्वमागमविरुद्धत्वं चाभिप्रेत्य लोकप्रसिद्धभेदस्य भ्रान्तिमात्रत्वं दृष्टान्तद्वयेनोपपादयति— जलभेदेति । एकस्यापि रवेः सूर्यस्य यथा जलभेदकृता बहुताऽनेकता यथा वा नभसोऽपि घटिकादिकृता बहुता घटाकाशो मठाकाश इति घटाद्युपाधिकृतमनेकत्वं तथा सदाऽविकृतस्य सर्वदैकरूपस्य बुद्धिदृशो बुद्धिसाक्षिणो बहुताऽपि मतिभेदकृता । बुद्धेर्भेदात्तत्साक्षिण आत्मनोऽपि भेदप्रतीतिरित्यर्थः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' 'एकः सन् बहुधा विचारः' 'एकं सन्तं बहुधा कल्पयन्ति' 'एकधैवानुद्रष्टव्यम् । नेह नानाऽस्ति किंचन' 'एकमेवाद्वितीयम्' 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।' 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इत्यादि श्रुतिस्मृतिभिरात्मन एकत्वप्रतिपादनाद्यथोक्तमानन्त्यमुपपन्नमित्यर्थः ॥ ७ ॥

दिनकृत्प्रभया सदृशेन सदा जनचित्तर(चरि)तं सकलं स्वचिता ।
विदितं भवताऽविकृतेन सदा यत एवमतोऽसित एव सदा ॥ ८ ॥

ननु तथाऽप्यात्मनः संसारित्वात्कथं तस्य ब्रह्मत्वमित्याशङ्क्याशेषसंसारधर्मविशिष्टान्तःकरणोपाधिनिबन्धनत्वादात्मा संसारिवद्भाति । परमार्थतस्त्वसंसार्येवाऽऽत्मेत्याह— दिनकृदिति । सर्वविषयाणां युगपदेव भासकतया दिनकृत्प्रभया सदृशेन स्वचिता स्वयंप्रकाशेनाविकृतेन भवता सकलं जनचित्तरतं सकलप्राणिनां धीचरितं सदा विदितं प्रकाशितमिति यतस्ततस्तत्कारणात्सदा कालत्रयेऽप्यसित एव । 'षिञ् बन्धने' इति धातोः संसार्येव सितः । सितो न भवतीत्यसितो बन्धरहित इत्यर्थः ॥ ८ ॥

उपरागमपेक्ष्य मतिर्विषये विषयावधृतिं कुरुते तु यतः ।
तत एव मतेर्विदिताविदिता विषयास्तु ततः परिणामवती ॥ ९ ॥

ननु यथाऽऽत्माऽविकृतः परिणामी न भवति कस्तर्ह्यस्मिञ्शरीरे परिणामी । मतिरेव परिणामिनी नाऽऽत्मेति । कस्मादित्यत्राऽऽह— । अथवा यथाऽऽत्मा प्रकाशस्वरूपत्वात्स्वविषयरागादिप्रकाशनाय न परिणमते, तथा बुद्धिरपि प्रकाशस्वरूपत्वात्स्वविषयशब्दादिप्रकाशनायाऽऽत्मवद्दीपादिवच्च न परिणमत इत्याशङ्क्याऽऽह— उपरागमिति । पदार्थान्तरस्य पदार्थान्तराकारमजननमुपरागः ।

च कश्चिज्ज्ञेयस्य ज्ञेयान्तरेण भवति । यथा स्फटिकस्य जपाकुसुमेन । कश्चिज्ज्ञातुर्ज्ञेयेन, कश्चिच्च ज्ञानस्य ज्ञेयेन यथा साक्षिणः साक्ष्येण बुद्धेश्च बोद्धव्यार्थजातेन । तत्र न साक्षिणः साक्ष्योपरागापेक्षया साक्ष्यसाधकत्वम् । किं तर्हि स्वत एव स साक्षिणस्तत्साधकत्वम् । स्वयंप्रकाशत्वात् । बुद्धेस्तु बोद्धव्योपरागापेक्षया चिद्बलावष्टम्भेन च शब्दाद्यर्थोपलब्धिहेतुत्वम् । स च बुद्धेर्बोद्धव्योपरागः क्रमेण कतिपयैरेव विषयैर्भवति । तच्चैतत्क्रमवत्कतिपयविषयोपलब्धिकार्योन्नेयम् । स च क्रमवत्कतिपयोपरागो बुद्धेः क्रमवत्परिणाममन्तरेण न घटते यतस्तस्मान्मतिक्रमेण विषयैरुपरागमपेक्ष्य विषयाकारपरिणामं चापेक्ष्य विषयावधृतिं कुरुते विषयनिश्चयं करोति तत एव मतेर्विषयाः केचन विदिताः केचनाविदिताश्च । यत एवमतः कारणान्मतिः परिणामवती । आत्मा तु न परिणामीत्यर्थः ॥ ९ ॥

मतिवृत्तय आत्मचिता विदिताः सततं हि यतोऽविकृतश्च ततः ।
यदि चाऽऽत्मचितिः परिणामवती मतयो विदिताविदिताः स्युरिमाः॥ १०॥

ननु बुद्धिवदात्मनोऽपि क्रमदृष्टत्वलिङ्गेन स्वविषयबुद्ध्यादिप्रकाशनाय क्रमेण परिणामोऽनुमीयतामित्याशङ्क्य बुद्धिवृत्तीनां क्रमेणाऽऽत्मप्रकाश्यत्वान्नैवमित्याह—मतिवृत्तय इति । आत्मचिताः सर्वा अपि मतिवृत्तयः सततं विदिताः । प्रकाशिता इति यावत् । ततः कारणादात्माऽविकृतः परिणामी न भवतीत्यर्थः । आत्मनः परिणामाङ्गीकारे दोषमाह—यदि चाऽऽत्मचितिरिति । आत्मचितिः परिणामवती । यदि चिद्रूप आत्मा परिणामी, तर्हि मतयो विदिताविदिताः स्युर्ज्ञाताज्ञाता भवेयुः । तच्चायुक्तम् । युगपदेव सर्वासां तद्वृत्तीनामात्मप्रकाश्यत्वदर्शनादिति ॥ १० ॥

चरितं तु धियः सकलं सततं विदितं भवता परिशुद्धचिता ।
मतिभेदगुणो नहि तेऽस्ति ततो यत एवमतोऽसदृशस्तु धिया ॥ ११ ॥

आत्मनः परिणामित्वे विदिताविदितत्वप्रसङ्गेन दोष उत्पादितः । तत्रेदमाशङ्क्यते—'नायं दोषोऽस्माकं तथैवोपलम्भात्' इति । तत्राऽऽह—चरितमिति । धियो बुद्धेः सकलं चरितं सततं विदितमिति यतस्ततः कारणादिदं तव चोद्यं निर्युक्तिकमित्यर्थः । सकलस्यापि धीचरितस्याऽऽत्मप्रकाश्यत्वेनाऽऽत्मनोऽपरिणामित्वे सिद्धे बुद्ध्यात्मनोः परिणामित्वापरिणामित्वेन वैलक्षण्यं सिद्धमित्याह—मतिभेदेति । चिदात्मना निखिलधीचरितं सततं विदितमिति यतस्तत एव बुद्धिदृशस्ते मतिभेदगुणो नास्ति । मतिभेदस्य गुणः परिणामो नास्ति यतस्ततस्त्वं तयाऽसदृशो बुद्ध्या समो न भवसि । बुद्धेः परिणामित्वात् । आत्मा बुद्धिविलक्षण इत्यर्थः ॥ ११ ॥

विदितत्वमविप्रतिपन्नतया मतिषु प्रगतं विषयेषु यथा ।
यत एवमतः परसंविदिता विदितत्वत एव यथा विषयाः ॥ १२ ॥

ननु बुद्धिविषयक आत्मेत्येतदयुक्तम् । बुद्धेरेव ग्राह्यग्राहकत्वसंभवात् । बुद्धिसाक्षी कश्चिदात्मा बुद्धिविलक्षणो नास्तीति बौद्धमतानुसारिभिरङ्गीकारादिति तत्राऽऽह— विदितत्वमिति । सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकानां बौद्धानां मध्ये सौत्रान्तिकेन 'ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते' इत्यस्मिन् बुद्धवाक्ये बुद्धेर्ग्राह्यग्राहकत्वाङ्गीकारात्, अविप्रतिपन्नतया विप्रपत्तिरहिततया मतिषु विदितत्वं दृश्यत्वं प्रगतं प्रसिद्धतरं विषयेषु यथा यद्वद्घटादिविषयाणां जडत्वाद्दृश्यत्वमुभयवादिसंप्रतिपन्नं, तद्वन्मतेरपि दृश्यत्वं दृशा व्याप्तत्वमुभयवादिसंप्रतिपन्नम् । ततः किं फलितमिति तत्राऽऽह—यत इति । यत एवं यस्मादेवं मतेर्दृश्यत्वमुभयवादिसंप्रतिपन्नं तस्मान्मतयः परसंविदिताः परेणान्येन साक्षिणा सम्यग्विदिताः । तत्र हेतुमाह—विदितत्वत एवेति । विदितत्वत एव दृश्यत्वादेव । अत्र दृष्टान्तमाह—यथा विषया इति । स्वव्यतिरिक्तेन साक्षिणा बुद्धयो विदिता भवितुमर्हन्ति । वेद्यत्वात् । घटवदित्यर्थः ॥ १२ ॥

परसंविदिताः सततं हि यतो न विदुः स्वममी विषयास्तु ततः ।
मतयोऽपि तथा परसंविदिता न विदुः स्वममूर्विषयास्तु यथा ॥ १३ ॥

यथाऽमी घटादयो विषयाः सततं परसंविदिताः स्वव्यतिरिक्तेन विज्ञाताः सन्तः स्वं न विदुस्तथाऽमूर्मतयोऽपि परसंविदिताः स्वं न विदुः । स्वशब्देन मतय उच्यन्ते । न स्वं प्रकाशयन्ति । एकस्य कर्मकर्तृभावविरोधात् । यथा घटादयो विषया इत्यर्थः । बुद्धेस्तद्वृत्तीनां च घटादिवद् वेद्यत्वादन्यस्य वेदितुरवश्यमङ्गीकर्तव्यत्वाद्बुद्धिसाक्षिणं दृशिरूपमनन्तममृतं विगुणं त्वद्वयस्यं ब्रह्माहमस्मीत्यवेहीति पूर्वेण संबन्धः ॥ १३ ॥

विषयाकृति संस्थितिरेकविधा मनसस्तु सदा व्यवहारविधौ ।
अहमित्यपि तद्विषया त्वपरा मतिवृत्तिरवज्वलिताऽऽत्मचिता ॥ १४ ॥

व्यवहारविधौ व्यवहारदशायां मनसो बुद्धेर्द्विधा वृत्तिः—स्तत्रैकविधा विषयाकृतिसंस्थितिर्विषयाकारेण दृश्याकारेण संस्थितिरेकविधेत्यर्थः । अपरा तद्विषया दृश्यघटादिविषया 'घटमहं पश्यामि' इत्येवमाकारा । द्रष्ट्राकारेति यावत् । आत्मचिताऽवज्वलिता यस्मात्तस्माद्दृश्याकारा द्रष्ट्राकारा चेति द्विविधाऽपि मतिवृत्तिरेव मतिधर्म एव । न त्वात्मधर्म इत्यर्थः ॥ १४ ॥

पुरुषस्य तु धर्मवदुद्भवति स्वरसेन मतेः स्वगुणोऽपि सती ।
अत आत्मगुणं प्रतियन्ति जना मतिवृत्तिमिमामहमित्यबुधाः ॥ १५ ॥

तर्ह्यहंकारस्याऽऽत्मधर्मत्वेन प्रतिभानं कथमिति चेदध्यासादित्याह—पुरुष-स्येति। अहंवृत्तिः स्वरसेन मतेः स्वगुणोऽपि सती पुरुषस्य धर्मवदुद्भवत्यविवेकादात्म-धर्मवत्प्रतिभाति । यत एवमतः कारणादहं ममेति मतिवृत्तिमात्मगुणत्वेनाबुधा जना एव प्रतियन्ति न तु विद्वांस इत्यर्थः ॥ १५ ॥

यदि सा न भवेज्जनमोहकरी व्यवहारमिमं न जनोऽनुभवेत् ।
विफलश्च तदा विषयानुभवो ज्ञगुणो नहि सेति यदा विदिता ॥ १६ ॥

यद्यहंवृत्तिरात्मधर्मो न भवति तर्हि तस्या अपलाप एव युक्त इति तत्राऽऽह—यदि सेति । जनमोहिनी देवानामपि व्यामोहकरी साऽहंवृत्तिर्न भवेद्यदि तर्हि 'अहं करोमि' 'अहं जानामि' इत्यादिकमिमं व्यवहारं जनो नानुभवेत्तस्मादहंकारस्याप-लापो न युक्त इत्यर्थः। तर्हि व्यवहारसिद्ध्यर्थमहंवृत्तिमर्भवतु, तस्या आत्मगुणत्वप्रति-भानं तु मा भूत् । आत्मनः परमार्थतो निर्गुणत्वादित्याशङ्क्य विपक्षे दूषणमुत्थाप-यन्नेतामाशङ्कां निराचष्टे—विफलश्चेति । यदा साऽहंवृत्तिर्ज्ञगुणो नेति विदि-ताऽध्यासमुखेनाहंवृत्तेरात्मधर्मत्वं यदा नाभ्युपगम्यते तदा विषयानुभवो विफलो भवेत् । एतदुक्तं भवति । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' 'पिप्पलं स्वाद्वत्ति' 'निर्गुणं गुणभोक्तृ च' इत्यादिनाऽऽत्मनो व्यवहारदशायां विषयानुभवितृत्वमभि-हितं विफलं भवेत् । तस्माद्व्यवहारावस्थायामध्यासमुखेनाहंकारस्याऽऽत्मधर्मत्वमभ्युप-गन्तव्यमिति ॥ १६ ॥

उपलभ्यघटादिनिभैव भवेन्मनसो यदि संस्थितिरेकविधा ।
पुरुषस्य चितिश्च न विक्रियते मतिवृत्तिमपेक्ष्य घटादिनिभाम् ॥ १७ ॥

विपक्षे दोषमुदीरयन्नयथोक्तमेवार्थं प्रपञ्चयत्युत्तरश्लोकद्वयेन—उपलभ्येति । मनसः संस्थितिरेकविधा विषयाकारवृत्तिरेव यदि । किंच घटादिनिभां मतिवृत्तिमपेक्ष्य पुरुषस्य चितिश्च न विक्रियते यद्यध्यासद्वारेणाऽऽत्मनो द्रष्ट्राकारपरिणामो नाभ्युपग-म्यते यदि, तर्ह्युपलभ्यघटादिनिभा वृत्तिरेव भवेद्दृश्याकारा वृत्तिरेव भवेत् । द्रष्ट्रा-कारा च वृत्तिर्न भवेत् ॥ १७ ॥

अवगन्तृगम्यचिदात्मधियोरहमित्यभिमानविहीनतया ।
स्थितयोरभिमानपुरःसरकं व्यवहारपथं न जनोऽवतरेत् ॥ १८ ॥

अवगन्तृगम्यचिदात्मधियोर्द्रष्टृदृश्यभावेनावस्थितयोश्चिदात्मधियोरहमित्यभिमानवि-

हीनतया स्थितयोरहमिति द्रष्ट्राकारपरिणामरहिततया स्थितयोः 'अहं जानामि' 'अहं करोमि' इत्यभिमानपुरःसरकं व्यवहारमार्गं जनो नावतरेत्। अयं भावः—मतिवृ-द्विविधा—दृश्याकारा द्रष्ट्राकारा च। तत्र चक्षुरादीन्द्रियद्वारेण बुद्धेर्घटाद्यर्थैः सह संबन्धे सति बुद्धिर्दृश्याकारा परिणमते। बुद्धौ चिदात्मनः प्रतिबिम्बितत्वाच्च सा चिदाकाराऽपि परिणमते। एतदाकारा च बुद्धिर्द्रष्ट्रेत्युच्यते। एवं सति बुद्धिसाक्षिणि बुद्धिप्रतिबिम्बात्मकद्रष्ट्राकारपरिणामस्याध्यस्तत्वादात्माऽपि द्रष्ट्राकार इव भवति। तेन हेतुनाऽऽत्मनः 'अहं करोमि' 'अहं मोक्ष्ये' इत्यादिव्यवहारोऽप्यस्तीव भाति, न तु निरवयवस्य चिन्मात्रस्य स्वतो व्यवहारोऽस्तीति ॥ १८ ॥

अहमीक्ष इति प्रथमं हि धिया सुविचिन्त्य ततो विषयाभिमुखम्।
नयनं प्रहिणोति तथाऽन्यदपि श्रवणादि वियत्प्रमुखस्य गुणे ॥१९॥

अहंकारपुरःसरो व्यवहार इत्यस्मिन्नर्थे स्वानुभवं प्रमाणयति—अहमीक्ष इत्यादि। प्रथममहमीक्षे पश्यामि तथा शृणोमि जिघ्रामीत्यादिधिया सुविचिन्त्य संकल्प्य, ततः संकल्पानन्तरं नयनं स्वविषयं प्रति प्रहिणोति प्रेरयति। तथाऽन्यच्छ्रवणादिकमपि वियत्प्रमुखस्य गुणे शब्दादौ प्रहिणोति प्रेरयतीत्यर्थः ॥ १९ ॥

अपहाय न कश्चिदहंकरणं व्यवहारमुपैति कदाचिदपि।
उपपन्नतरा हि मतेस्तु ततो व्यवहारपथं प्रति कारणता ॥ २० ॥

स्वानुभवप्रमाणसिद्धमर्थं संक्षिप्य कथयन्नुपपादितमर्थमुपसंहरति—अपहायेति। लोके कश्चिदपि जनः कदाचिदप्यहंकरणमपहाय परित्यज्य व्यवहारं स्नानभोजनादिकं नोपैति यतः, ततः कारणात् मतेरहंवृत्तेर्व्यवहारपथं प्रति कारणतोपपन्नतरा सुतरामेवोपपन्नेत्यर्थः ॥ २० ॥

चितिशक्तिगुणः किमहंकरणं किमु बुद्धिगुणोऽथ भवेदुभयोः।
इति चिन्त्यमिदं मनसाऽनलसैरुपपत्तिभिरात्महितं यतिभिः ॥ २१ ॥

व्यवहाराङ्गत्वेनाहंकारं प्रसाध्येदानीं तस्याऽऽत्मधर्मत्वमुतानात्मधर्मत्वमथवोभयधर्मत्वमिति विकल्प्याऽऽत्मधर्मत्वं निराकर्तुमाह—चितीति। अहंकरणं चितिशक्तिगुणः किम्, चिद्रूपस्याऽऽत्मनो गुणः किम्, उत बुद्धेर्गुणः, अथवा बुद्ध्यात्मनोरुभयोर्गुण इतीत्थं मनसाऽनलसैरालस्यरहितैर्यतिभिरुपपत्तिभिर्युक्तिभिश्चिन्त्यं विचार्यम्। किमर्थम्। आत्महितमात्महिताय मोक्षायेत्यर्थः ॥ २१ ॥

उपलभ्यमहंकरणं न भवेत्पुरुषस्य गुणो यदि तर्हि भवेत्।
गुणिरूपमथोऽवयवं गुणिनो न विहाय गुणः पृथगस्ति यतः ॥२२॥

उपपत्तिभिर्विचार्यमाणे किं युक्तमित्याकाङ्क्षायामात्मगुणत्वमयुक्तमित्याह—उप-लभ्यमित्यादिना । अहंकरणं यदि पुरुषगुणो भवेत्तर्हि तदहंकरणं पुरुषेणोपलभ्यं न भवेत् । आत्मना प्रकाश्यं न भवेत् । तत्र हेतुमाह—गुणिरूपमिति । गुणो धर्मा-धर्मादि गुणिरूपं गुणिस्वरूपं गुणिनोऽवयवं विहाय गुणिनः सकाशात्पृथक् न तिष्ठति । यथा पटगतं शौक्ल्यं पटं तदवयवभूतं तन्तुं विहाय पृथङ्न तिष्ठति तद्वदहंका-रोऽप्यात्मगुणश्चेदात्मनः सकाशात्पृथङ्न तिष्ठति । तथा सति तयोरभेदात्प्रकाश्यप्र-काशकभावो न घटत इति भावः ॥ २२ ॥

न गुणो गुणिनि स्थितवान् गुणिना विषयी क्रियते न च तस्य गुणैः ।
नहि देशकृता न च वस्तुकृता गुणिनोऽस्ति गुणस्य भिदा तु यतः ॥२३॥

तर्हि गुणिन्येवावस्थितः सन्गुणो गुणिना तद्गुणैर्वा प्रकाश्यतामिति तत्राऽऽह—न गुण इति । गुणिनि स्थितवान्गुणो गुणिना तस्य गुणिनो गुणैर्वा न विषयी क्रियते न प्रकाश्यते । अहंकाराख्यो गुणो ज्ञानगुणेन न प्रकाश्यत इत्यर्थः । कुतः कारणाद्गुणिना गुणो न प्रकाश्यत इत्यत्राऽऽह—नहीति । गुणस्याहंकारस्य गुणिन आत्मनः सकाशाद्देशकृता भिदा नास्ति । आत्मनः सर्वगतत्वात् । तथा वस्तुकृता भिदा नास्ति । विचार्यमाणे परमात्मव्यतिरिक्तवस्त्वन्तराभावाद्वस्तुनिबन्धनो भेदो नास्तीत्यर्थः । भेदस्य धर्मिप्रतियोगिसापेक्षत्वाद्धर्मिप्रतियोगिनोश्च भेदसापेक्षत्वाद-न्योन्याश्रयादिदोषप्रसङ्गात्कस्यापि भेदो दुर्निरूप इति भावः ॥ २३ ॥

न परस्परमग्निगुणोऽग्निगतो विषयत्वमुपैति कदाचिदपि ।
नहि वह्निरपि स्वगुणं स्वगतं विषयी कुरुते स्वगुणेन भुवि ॥ २४ ॥

ज्ञानगुणेनाहंकारो न प्रकाश्यत इत्यत्र हेतुमाह—न परस्परमिति । अग्निगतोऽ-ग्निगुणः परस्परमन्योन्यं प्रकाशाख्येन गुणेनौष्ण्यत्वगुणो वौष्ण्यत्वगुणेन प्रकाशगुणो वा कदाचिदपि विषयत्वं नोपैति, परस्परं प्रकाश्यप्रकाशकभावं नोपैति । तर्हि वह्निः स्वयमेव स्वगतेन गुणेन गुणान्तरं प्रकाशयत्विति तत्राऽऽह—नहीति । भुवि लोके वह्निरपि स्वगतं गुणं स्वगतेन प्रकाशाख्येन गुणेनोष्णत्वगुणं न विषयी कुरुते न प्रकाशयति । अदृष्टत्वात् । तस्माद्गुणिना गुणस्य वेद्यत्वं वा गुणिनो गुणैर्वेद्यत्वं वा न संभवतीत्यर्थः ॥ २४ ॥

कणभुग्यमचीक्लृपदात्मगुणं गुणपूगमनित्यमनात्मगुणम् ।
अनयैव दिशा स निराक्रियतां नहि नित्यमनित्यगुणेन गुणि ॥२५॥

अहंकारस्याऽऽत्मगुणत्वे तस्याऽऽत्मना प्रकाश्यत्वायोगादहंकार आत्मगुणो न भवतीत्युक्तं तत्रेयमाशङ्का—' बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मगुणा आत्मविशेष-

गुणाः ’ इति काणादवचनात्कथमात्मनो निर्गुणत्वं प्रतिपाद्यत इति । अत्राऽऽह—कणभुगिति । परमार्थतोऽनात्मगुणमनात्मनो बुद्धेर्गुणमनित्यमथावद्द्रव्यमाविनं गुणपूगं गुणसमूहं कणभुक्कणाद आत्मगुणत्वमचीक्लृपदात्मगुणत्वेन कल्पितवान् स गुणपूगोऽनयैव दिशा सम्यङ्निराक्रियताम् । यथाऽहंकारस्याऽऽत्मगुणत्वे तस्याऽऽत्मना प्रकाश्यत्वं न घटते गुणगुणिनोरत्यन्तभेदाभावात्तथा बुद्ध्यादिरप्यात्मगुणश्चेत्तस्याऽऽत्मना प्रकाश्यत्वं न घटत इत्यनया दिशा निराक्रियतामित्यर्थः । किंच बुद्ध्यादेरनित्यत्वादपि नित्यात्मगुणत्वं न घटत इति हेत्वन्तरमाह—नहीति । नित्यात्मवस्त्वनित्येन बुद्ध्यादिगुणेन गुणि न भवतीत्यर्थः ॥ २५ ॥

वियतः प्रभवं प्रवदन्ति यतः श्रुतयो बहुशः खमनित्यमतः ।
उपमानमनित्यगुणं वियतो नहि नित्यमिहास्ति कणादकृते ॥ २६ ॥

ननु नित्यस्याऽऽकाशस्यानित्येन शब्दगुणेन गुणित्वं दृष्टं तद्वदत्रापि भविष्यतीत्याशङ्क्याऽऽह—वियत इति । ‘ तस्माद्वा एतस्मादात्मन आकाशः संभूतः ’ ‘ नाभ्या आसीदन्तरिक्षम् ’ इत्याद्याः श्रुतयो बहुशो बहुवारं वियत आकाशस्य प्रभवमुत्पत्तिं वदन्ति यतः, अतः कारणात्खमाकाशमनित्यम् । ततश्चाऽऽकाशदृष्टान्तेनाऽऽत्मनाऽनित्यगुणेन गुणित्वं न साधयितुं शक्यमित्यर्थः । तर्ह्याकाशव्यतिरिक्तं नित्यद्रव्यमात्मनोऽनित्यगुणेन गुणित्वे दृष्टान्तभूतं वैशेषिकसमये किंचित्प्रसिद्धं स्यादित्याशङ्क्य परिहरति— उपमानमिति । इह कणादकृते समये वियतोऽन्यदनित्यगुणं क्षणिकगुणं नित्यं नित्यद्रव्यं दृष्टान्तभूतं नास्ति । तस्मादात्मनोऽनित्यगुणेन गुणवत्त्वं न संभवतीत्यर्थः ॥ २६ ॥

मनसा पुरुषः पुरुषेण मनो नभसा मुसलं मुसलेन नभः ।
नहि योगवियोगमुपैति कुतोऽवयवित्वनिराकरणादमुतः ॥ २७ ॥

स्पष्टम् ॥ २७ ॥

इह रज्जुघटादि हि सावयवं समुपैति युजामितरेतरतः ।
इति दृष्टपथोऽन्यददृष्टमपि स्वयमूह्यमिदं त्वपरित्यजता ॥ २८ ॥

इह सावयवं रज्जुघटादीतरेतरतः परस्परं युजां योगं समुपैतीत्येतल्लोके दृष्टं यतः, अतः कारणादतोऽन्यददृष्टमपि यद्वस्तु तत्रापि सावयवयोरेव मूर्तयोः संयोगो भवतीत्येतत्स्वयमूह्यमिदं दृष्टमपरित्यजताऽविस्मरता पुरुषेणेत्यर्थः ॥ २८ ॥

नहि सावयवं विगतावयवैर्विगतावयवं न च सावयवैः ।
उपयाति युजामिति दृष्टमिदं यत एवमतः वियतमुक्तमदः ॥ २९ ॥

ननु यदि दर्शनं प्रमाणं तर्हि सावयवनिरवयवयोरपि नभोमुसलयोः संयोगदर्शनादत्रापि दर्शनं प्रमाणं भवतीत्याशङ्क्य नभसोऽतीन्द्रियत्वात्तत्समवायिनः संयोगस्यापि तथात्वाद्दर्शनं प्रमाणं न भवतीत्याह— नहीति । विगतावयवैः सावयवं वस्तु, विगतावयवं च सावयवैर्युजां यागं नोपैतीतीदमेव लोके दृष्टं, ननु सावयवनिरवयवयोः संयोगः कुत्रापि दृष्टो येन प्रमाणं स्यात । अयं भावः——नभोमुसलयोः संयोगः प्रत्यक्षो न भवति । संयोगाश्रयस्यातीन्द्रियत्वे सति संयोगस्यापि तथात्वाद्वायुवनस्पतिसंयोगवदिति । तस्मान्नभोमुसलयोः संयोगस्यातीन्द्रियत्वेन द्रष्टुमशक्यत्वादत्रापि दर्शनमप्रमाणमिति पूर्ववादिनोक्तमचतुरमिति । यथोक्तन्यायेन साधितमर्थमुपसंहरति— यत इति । यत एवं यस्मादेवं सावयवयोरेव संयोगो दृष्टस्ततः कारणान्मदुक्तं स्थितमात्मनभसोर्नभोमुसलयोर्वा संयोगवियोगौ न भवत इति यन्मया पूर्वमुक्तं तदिदं सुस्थमित्यर्थः ॥ २९ ॥

नहि कल्पितभागसमागमनं विगतावयवस्य घटेत, कुतः ।
वितथत्वमतिः सुदृढा तु यतः परिकल्पितवस्तुषु इत्यमुतः ॥ ३० ॥

ननु निरवयवत्वेऽप्युपचारितावयवैः संयोगो भविष्यतीति चेन्नैवमित्याह——नहीति । विगतावयवस्य स्वत एव निरवयवस्य वस्तुनः कल्पितभागैः समागमनं संयोगो न घटत । तत्कुत इति तत्राऽऽह— वितथत्वमतिरिति । परिकल्पितवस्तुषु वितथत्वमतिर्मिथ्यात्वबुद्धिः सुदृढा शुक्तिरजतादौ सम्यग्व्याप्ता । अतः कारणात्कल्पितभागसमागमनं न घटत इत्यर्थः ॥ ३० ॥

इह वेदशिरःसु तदर्थविदः प्रवदन्ति समस्तजगत्प्रकृतिम् ।
परमात्मपदं दृशिमात्रवपुर्ध्रुवमेकमतोऽन्यदनित्यमिति ॥ ३१ ॥

किंचाऽऽत्मनो बुद्ध्यादिभिरनित्यैर्गुणैर्गुणवत्त्वं ब्रुवाणस्य वैशेषिकस्यानुमाने दृष्टान्तापेक्षितत्वादेवंरूपस्य दृष्टान्तस्य च 'नित्यं निर्गुणमेवाद्वितीयं ब्रह्म ततोऽन्यत्सर्वं वाचाऽऽरम्भणमनित्यम्' इति ब्रुवन्तं वेदान्तवादिनं प्रति दर्शयितुमशक्यत्वाच्च । तथा चानित्यगुणेन नित्यगुणित्वपक्षस्यासंभव एवेत्याह श्लोकद्वयेन——इहेत्यादिना । इह वेदान्तमते तदर्थविदो वेदान्ततात्पर्यज्ञाः 'एकमेवाद्वितीयम्' 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्येवमादिषु वेदशिरःसु परमात्मपदमेव वस्त्वस्ति ततोऽन्यदनित्यमिति वदन्ति । कीदृशं परमात्मपदम् । समस्तजगत्प्रकृतिं निखिलजगद्विवर्ताधिष्ठानमत एव दृशिमात्रवपुः केवलज्ञप्तिविग्रहं, अत एवैकं नानात्वरहितं ध्रुवं सत्यं, अतोऽन्यज्जगत्सर्वमनित्यम् ॥ ३१ ॥

अत एव न किंचिदुदाहरणं ध्रुवमस्ति परस्य विनाशिगुणम् ।
यत एवमतः स्थितमुक्तमदो नहि नित्यमनित्यगुणेन गुणि ॥ ३२ ॥

अत एव परस्य वैशेषिकस्य विनाशिगुणं वस्तु नित्यमिति किंचिदप्युदाहरणं नास्ति । यत एवमतः कारणान्नित्यमनित्यगुणेन गुणि न भवतीति यन्मया पूर्वमुक्तं तदिदं सुस्थमित्यर्थः ॥ ३२ ॥

उपलभ्यमहंकरणं भवितुं क्षमते दृशिरूपगुणो न यतः ।
विषयाकृतिरञ्जितधीगुणवद् विषयत्वमहंकरणस्य ततः ॥ ३३ ॥

एवं प्रसङ्गादागतं काणादमतं निराकृत्य, इदानीमहंकारस्यान्तःकरणधर्मत्वमनुसंदधानस्तस्यानात्मगुणत्वमसंकुचितमित्याह—उपलभ्यमिति । अहंकरणमुपलभ्यं दृश्यं भवितुं क्षमते, दृशिरूपमात्रस्य वस्तुनः स्वयंप्रकाशत्वादुपलभ्यत्वं गुणो न भवदित्यतः कारणाद्दृश्यस्याहंकारस्य दृगात्मगुणत्वं न घटते । अतोऽहंकारस्यापि विषयाकृतिरञ्जितधीगुणवद्विषयत्वमेव । ततश्चाऽऽत्मगुणत्वं न संभवति किंत्वन्तःकरणधर्मत्वमेवेत्यर्थः ॥ ३३ ॥

विषयप्रकृतिं प्रतिपन्नवतीं मतिवृत्तिमहंकरणं च मतेः ।
उभयं परिपश्यति योऽविकृतः परमात्मसदुक्तिरसौ पुरुषः ॥ ३४ ॥

अहंकारस्याऽऽत्मगुणत्वनिराकरणपूर्वकं परिशोधितस्य त्वंपदार्थस्य शोधितेन तत्पदार्थेनैक्यलक्षणवाक्यार्थं कथयति—विषयेत्यादिना । विषयप्रकृतिं प्रतिपन्नवतीं मतिवृत्तिं दृश्याकारां मतिवृत्तिं, मतेर्द्रष्टाकारपरिणाममहंकारं च तमुभयं धीपरिणामं यः प्रत्यगात्माऽविकृतः सन्परिपश्यति, असौ बुद्धिसाक्षी पुरुषः स्वयमेव परमात्मसदुक्तिः परमात्मेति सत्, इति चोच्यते । 'नान्योऽतोऽस्ति द्रष्टा' 'तत्त्वमसि' इत्यादिश्रुतेरित्यर्थः ॥ ३४ ॥

ननु देहभृदेष कथं भवताऽभिहितः परमात्मसदुक्तिरिति ।
न विरुद्धमवादिषमेतदहं श्रुतिरप्यमुमर्थमुवाच यतः ॥ ३५ ॥

उक्तसमन्वये प्रत्यक्षादिप्रमाणान्तरविरोधमाशङ्कते—नन्विति । एष देहभृत्संसारित्वेन प्रतीयमानो जीवस्तद्विरुद्धः परमात्मेति भवता कथमभिहितमिति । तत्त्वंपदार्थयोः किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्मात्मकसंसारस्य प्रतीयमानस्यान्तःकरणोपाधिनिबन्धनत्वान्नैवमिति परिहरति—न विरुद्धत्वमिति । मायातत्कार्यान्तःकरणोपाधिविशिष्टयोरेकत्वासंभवेऽपि जहदजहल्लक्षणया विरुद्धांशप्रहाणेनाविरुद्धाद्वयसदानन्दप्रत्यग्बोधस्य त्वंपदलक्ष्यार्थस्य शुद्धसदानन्दाद्वयबोधस्य तत्पदलक्ष्यार्थस्य चैक्यलक्षणलक्षितत्वेन विरोधासंभवान्न किंचिदपि विरुद्धमवादिषमित्युक्तम् ॥ ३५ ॥

अमतं न मतेरमतस्तदिदं यदमुत्र तदेव तु कश्चिदिति ।
श्रुतिषु प्रतिपादितमस्य दृशेः परमात्मपदत्वममूषु भृशम् ॥ ३६ ॥

अस्मिन्नर्थे श्रुतिं प्रमाणयति—अमतमिति । 'अमतं मन्तृ अविज्ञातं विज्ञातृ' इत्यक्षरब्राह्मणम् । 'न मतेर्मन्तारं मन्वीथाः' इत्युषस्तिब्राह्मणम् । 'तत्त्वमसि' इति च्छान्दोग्यं च 'तत्' इति विवक्षितम् । 'इदं सर्वं यदयमात्मा' इति मैत्रेयीब्राह्मणम्, 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति कठवल्ली । 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति केनोपनिषत् । 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति कठवल्ली । श्रुत्यन्तरं च—'अन्तर्याम्यमृतः' 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' प्रज्ञानं ब्रह्म' 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चात्' 'आत्मा वा इदमेक एव' 'ब्रह्म वा इदम्' 'योऽसावादित्ये पुरुषः सोऽसावहम्' 'अन्यदेव तद्विदितात्' 'अन्यत्र धर्मात्' 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम्' 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति । अस्थूलमनणु' 'ब्रह्मैव सन् ब्रह्माप्येति' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि 'इति' शब्देन ग्राह्यम् । अमूषु श्रुतिष्वस्य दृशेर्बुद्धितद्वृत्तिसाक्षिणः प्रत्यग्बोधस्य परमात्मपदत्वं सुखैकतानकूटस्थज्ञप्तिस्वरूपत्वं भृशं तात्पर्येण प्रतिपादितं यस्मात्, तस्मात् तत्त्वंपदार्थयोस्तादात्म्ये कश्चिदपि विरोधो नास्तीत्यर्थः॥३६॥

यदनभ्युदितं वदनेन सदा नयनेन च पश्यति यन्न सदा ।
श्रवणेन च यन्न शृणोति सदा मनसाऽपि च यन्मनुते न सदा॥ ३७॥
वदनं नयनं च तथा श्रवणं मन एव च येन मतं सततम् ।
अवगच्छ तदेव पदं परमं त्वमिति श्रुतिरीक्षितुरुक्तवती ॥ ३८ ॥
परमात्मपदत्व इयं च मया श्रुतिरल्पकणोक्तिरिहाभिहिता ।
अणिमादिगुणं सदिति प्रकृतं तदसि त्वमिति श्रुतिरप्यवदत् ॥ ३९ ॥

'तदेव ब्रह्म' इत्यादिकां तलवकारश्रुतिं प्रकटयति सार्धश्लोकद्वयेन—यदित्यादिना । तत्र 'यद्वाचाऽनभ्युदितम्' 'यन्मनसा न मनुते' इत्यादिमन्त्रपञ्चकस्य प्रथमपादांशान् विवृणोति—यदनभ्युदितमित्याद्यश्लोकेन । सदा वदनेन वागिन्द्रियेण यदात्मतत्त्वमनभ्युदितं साक्षादनभिहितं, सदा नयनेन चक्षुरिन्द्रियेण यत् तत्त्वं न पश्यति, सदा श्रवणेन श्रोत्रेन्द्रियेण यन्न शृणोति जनः, सदाऽन्तःकरणे-

नापि यत्तत्त्वं न मनुते, रूपादिराहित्यादुभयकरणेनापि नाऽऽत्मतत्त्वं प्रकाश्यते स्वयं-प्रभत्वादित्यर्थः । तर्हि शास्त्रोपदेशानर्थक्यमिति न मन्तव्यमविवेकादात्मन्यारोपितानात्मधर्मनिरसनेनाऽऽत्मनो नित्यमुक्तत्वप्रतिपादकत्वाच्छास्त्रस्येति भावः । अथ 'येन वागभ्युद्यते, येन प्राणः प्रणीयते' इतीमं भागं मन्त्रपञ्चकस्य द्वितीयपादरूपं विवृणोति—वदनमिति श्लोकार्धेन । सततं वदनं वागिन्द्रियं, नयनं चक्षुरिन्द्रियं, तथा श्रवणं श्रोत्रेन्द्रियं, मन एव । चकारात्तत्परिणामश्च मतं प्रकाशितम् । जडस्वभावं वागादिकरणं चिद्रूपेणाऽऽत्मनाऽनुगृहीतमेव स्वविषये प्रवर्तितुं क्षममित्यर्थः । 'तदेव ब्रह्म त्वं विद्धि' इतीमं भागं विवृणोति—अवगच्छेति । त्वं तदेव परमं पदमात्मत्वेनावगच्छेतीत्थंप्रकारेण श्रुतिः, ईप्सितुर्द्रष्टुमिच्छोरधिकारिणः पुरुषस्याऽऽत्मतत्त्वमुक्तवत्युपदिष्टवतीति । एवं परमात्मपदत्व श्रुतिः तत्प्रतिपादिकेयं श्रुतिश्चाल्पकणाद्दीषदुक्तिः प्रमाणत्वेनाभिहिता प्रदर्शिता 'अमतं न मतरमतस्तदिदम्' इत्यादिना । अल्पमल्पं कणशो लेशत उक्तेत्यल्पकणोक्तिस्तथा प्रदर्शितेत्यर्थः । एवं तलवकारश्रुतिं प्रपञ्चयित्वा, इदानीं छान्दोग्यश्रुतिं प्रपञ्चयति—अणिमेति । अणिमादिगुणं 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यादिश्रुतिप्रसिद्धमणिमादिगुणकं सूक्ष्मत्वसर्वगतत्वस्वयंप्रभत्वादिगुणकं 'सत्' इति प्रकृतं 'सदेव सोम्येदमग्र आसीत्तदैक्षत, तत्तेजोऽसृजत' इत्यादिना निखिलजगत्कारणत्वेन प्रकृतं वस्तु यद्ब्रह्म, तदेव त्वमसीति श्रुतिरेकत्वमप्यवददुपदिष्टवती । 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति प्रवेशश्रवणात् । सद्रूपं ब्रह्मैवाऽऽत्मेत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥

नभसोऽवयवो विकृतिश्च यथा घटकादिनभो न भवेत्तु तथा ।
परमात्मन एष न चावयवो विकृतिश्च शरीरभृदित्यमृषा ॥ ४० ॥

श्रुतेः स्वतःप्रामाण्यावष्टम्भेन प्रत्यगात्मनो ब्रह्मत्वमभ्यधायि तत्रेयमाशङ्का—उक्तश्रुतिवृन्दस्यात्यन्ताभेदे तात्पर्यं नास्ति । किंतु तस्यांशांशिभावगमकत्वं प्रकृतिविकृतिभावगमकत्वं वेति, तत्राऽऽह—नभस इति । घटकादिनभो घटिकाद्याकाशः । नभसोऽनवच्छिन्नाकाशस्यावयवो विकृतिश्च यथा न भवेत्तथैष शरीरभृज्जीवपदार्थोऽपि परमात्मनोऽवयवो विकृतिश्च न भवदित्येषा यथार्था बुद्धिरमृषा मृषा न भवेत्किंतु यथार्थेत्यर्थः ॥ ४० ॥

करकादिनिमित्तकमेव यथा करकाम्बरनाम भवेद्वियतः ।
परमात्मदृशोरपि नाम तथा पुरहेतुकमेव तु जीव इति ॥ ४१ ॥

ननु जीवपरयोरंशांशित्वादिलक्षणः कियानपि भेदो नास्ति तर्हि जीव इति

नामभेदः कथमित्याशङ्क्याऽऽह—करकादीति । एकस्यापि वियतः करकादिनिमित्तकमेव यथा करकाम्बरमिति नाम भवेत्तथा परमात्मदृशोरपि दृग्रूपस्य परमात्मनोऽपि पुरहेतुकमेव शरीरहेतुकमेव जीव इति नामभेदो भवेन्न वस्तुतो भेद इत्यर्थः ॥ ४१ ॥

जनितं वियदग्रणि येन जगत्परमात्मसदक्षरनामभृता ।
प्रविवेश स एव जगत्स्वकृतं खमिवेह घटं घटसृष्टिमनु ॥ ४२ ॥

किंचाविकृतस्यैव ब्रह्मणः प्रवेशश्रवणान्न विकारोऽवयवो वा जीव इत्याह—जनितमिति । परमात्मेति सदित्यक्षरमिति च नाम बिभर्तीति परमात्मसदक्षरनामभृदिति । परमात्मसदक्षरनामभृता येन वियदग्रण्याकाशादिकं जगज्जनितं सृष्टं स परमात्मैव स्वकृतं स्वयं मायया निर्मितं जगज्जीवात्मना प्रविवेश प्राविशत् । निरंशस्य परमात्मनः कथं प्रवेश इत्यत्राऽऽह—खमिति । घटसृष्टिमनु यथा खमाकाशं घटं प्रविशति तद्वदित्यर्थः । निरवयवस्य सर्वगतस्याऽऽत्मनः बुद्ध्याभिव्यक्तिरेव प्रवेशो न तु देवदत्तादेर्गृहादिप्रवेश इवेति भावः ॥ ४२ ॥

उदपद्यत खप्रमुखं हि जगत्परमात्मन इत्यपि याः श्रुतयः ।
अवधार्यत आभिरभेदमतिः परमात्मसतत्त्वसमर्पणतः ॥ ४३ ॥

एवं तावत् ' तत्सृष्ट्वा । तदेवानुप्राविशत् ' ' स एष इह प्रविष्ट आ नखाग्रेभ्यः ' ' अन्तः प्रविष्टः शास्ता जनानाम् ' इति प्रवेशवाक्याच्चतुर्विधेषु देहेष्वन्तःकरणसाक्षितया प्रविष्टस्य परमात्मन एव जीव इति नाम भवेद्यस्मात्तस्माज्जीवः परमात्मनोऽशो विकारो वा न भवेदित्युक्तम् । इदानीमस्मिन्नर्थे सृष्टिवाक्यमपि प्रमाणमित्याह—उदपद्यतेति । परमात्मनः सकाशात्खप्रमुखं जगदुत्पद्यत इत्यपि याः सृष्टिश्रुतयः ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः ' इत्यादयस्ताभिरप्यभेदमतिरेवावधार्यते । कथमवधार्यत इत्यत्राऽऽह—परमात्मसतत्त्वसमर्पणत इति । परमात्मकार्यस्य जगतस्तत्प्रविष्टस्य जीवस्य च परमात्मसतत्त्वसमर्पणात्परमात्मतामात्रत्वप्रतिपादनेनाभेदमतिरेवावधार्यते प्रकाश्यते । ' सर्वं खल्विदं ब्रह्म ' ' वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' ' नान्योऽतोऽस्ति द्रष्टा ' इत्यादिश्रुतिभिरित्यर्थः ॥ ४३ ॥

यदि सृष्टिविधानपरं वचनं फलशून्यमनर्थकमेव भवेत् ।
जगदित्थमजायत धातुरितिश्रवणं पुरुषस्य फलाय न हि ॥ ४४ ॥

ननु सृष्टिवाक्यं सृष्टिप्रतिपादनपरमेव नाभेदप्रतिपादनपरमप्येकस्य वाक्यस्य नानार्थताया अन्याय्यत्वादित्याशङ्कायामाह—यदीति । वचनं सृष्टिवाक्यं सृष्टिविधानपरं यदि तर्हि तद्वचनं फलशून्यं ततश्चानर्थकमेव भवेत् । सृष्टिपरत्वे कथं फलशून्यत्वमित्यत आह—जगदित्थमिति । धातुः परमेश्वराज्जगदित्थमजायतेतिश्रवणमात्रं श्रोतुः पुरुषस्य फलायाऽऽत्यन्तिकदुःखनिवृत्तये न भवेत् । हि यस्मात्सृष्टिवाक्यस्य स्वतः फलवत्त्वाश्रवणात्सृष्टिप्रतिपादनपरत्वेऽशेषानर्थनिवृत्तिलक्षणफलाभावादानर्थक्यमेव प्रसज्येत । एकत्वप्रतिपादकवाक्यस्य तु 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परम्' 'न बिभेति कुतश्चन' इति फलवत्त्वश्रवणात् 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायेन तत्त्वमसिवाक्यशेषभूतं सत्सृष्टिवाक्यमपि फलवत्स्यादिति भावः ॥ ४४ ॥

अनृतत्वमवाद्यसकृद्विकृतेर्निरधारि सदेव तु सत्यमिति ।
श्रुतिभिर्बहुधैतदतोऽवगतं जगतो न हि जन्म विधेयमिति ॥ ४५ ॥

इतश्च सृष्टिवाक्यस्य सृष्टिपरत्वमयुक्तमित्याह—अनृतत्वमिति । विकृतेर्विकारस्यासकृद्बहुवारमनृतत्वमवादि मिथ्यात्वमुक्तम् । किंच सदेव सत्यमिति निरधारि निर्धारितम् । अत्र प्रमाणमाह—श्रुतिभिरिति । 'वाचाऽऽरम्भणं विकारो नामधेयम्' इत्यारभ्य 'तत्सत्यं, स आत्मा, तत्त्वमसि' इत्यादिश्रुतिभिर्बहुधा बहुप्रकारेण दृष्टान्तेन कार्यस्य जगतोऽसत्यत्वं कारणस्य ब्रह्मणः सत्यत्वं च निर्धारितम् । तस्माज्जगतो जन्म न विधेयमित्येतदवगतमस्माभिरित्यर्थः ॥ ४५ ॥

न च तत्त्वमसीत्यसकृद्वचनं जगतो जनिमात्रविधौ घटते ।
परमात्मपदानुमतिं तु यदा जनयेत्पुरुषस्य तदा घटते ॥ ४६ ॥

सृष्टिवाक्यस्य मिथ्याभूतसृष्टिपरत्वमयुक्तं किंत्वेकत्वपरत्वमेव युक्तमित्युक्तम् । इदानीं तत्त्वमसिवाक्यस्यैव सृष्टिपरत्वं कस्मान्न भवेदित्यत आह—न चेति । जगतो जनिमात्रविधौ तत्त्वमसीतिवाक्यस्य जन्ममात्रप्रतिपादनपरत्वे फलवत्त्वं न भवेत् । ज्ञानजनकत्वाभावात् । तत्त्वमसीत्यसकृद्वचनमसकृदभ्यासश्च न घटते न भवेत् । अविवक्षितार्थस्यासकृदभ्यासासंभवात् । अयं भावः—'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायात्सृष्टिवाक्यस्य महावाक्येनैकवाक्यत्वे संभवति सति तद्विपर्यासेन महावाक्यस्य सृष्टिवाक्यशेषत्वं न घटते नैरर्थक्यप्रसङ्गादिति । ननु तत्त्वमसिवाक्यस्य सृष्टिपरत्वं यथा न घटते तथा सृष्टिवाक्यस्य तत्त्वमसीतिमहावाक्यशेषत्वमपि न घटत इति तत्राऽऽह—परमात्मेति । पुरुषस्य प्रत्यगात्मनः परमात्मपदानुमतिं

ब्रह्मत्वबुद्धिं यदा जनयेन्महावाक्यं तदा वाक्यजनितज्ञानस्य मोक्षफलत्वात्तच्छेषतया सृष्टिवाक्यमपि घटते विपरीतं चेन्न घटत इत्यर्थः ॥ ४६ ॥

स्थिरजङ्गमदेहधियां चरितं परिपश्यति योऽविकृतः पुरुषः ।
परमात्मसदुक्तिरसाविति यद्भणितं तदतिष्ठिपमित्थमहम् ॥ ४७ ॥

'यतो वा इमानि भूतानि जायन्ते' 'तत्सृष्ट्वा । तदेवानुप्राविशत्' 'य आत्मनि तिष्ठन्-आत्मानमन्तरो यमयति' इत्यादीनां पञ्चविधार्थवादवाक्यानामभेद एव तात्पर्यमिति दर्शयित्वेदानीमविरोधं निगमयति—स्थिरजङ्गमेति । स्थिरजङ्गमदेहधियां चरितं जीवात्मनां या बुद्धिवृत्तयस्ता यः पुरुषोऽविकृतः सन्परिपश्यत्यसौ पुरुषः स्वयमेव परमात्मसदुक्तिरिति यत्पूर्वं मया भणितं तदित्थमनेन प्रकारेणातिष्ठिपं प्रमाणान्तरविरोधपरिहारेण प्रतिष्ठापितवानस्मीत्यर्थः ॥ ४७ ॥

पृथगेव यदाऽक्षरतो मतिविन्मकरोदकवन्न घटाम्बरवत् ।
न विरोत्स्यति तत्त्वमसीति तदा वचनं कथमेष स इत्यपि च ॥४८॥

यथा मकर उदकाद्भेदं सुतरामेव[न] सहते तथा तत्त्वमसिवाक्यं जीवब्रह्मणोरंशांशित्वादिलक्षणं भेदमीषदपि न सहत इत्याह—पृथगेवेति । यदा मतिविद्बुद्धिसाक्षी मकरोदकवन्मत्स्योदकयोरिवाक्षरतो ब्रह्मणः सकाशात्पृथगेव भिन्न एव । न तु घटाम्बरवद्यथा घटाकाशस्य महाकाशादुपाधिकृतो भेदो नाङ्गी क्रियते । परंतु तद्विपरीतं यदा भेद एव स्वी क्रियेत तदा तत्त्वमसीतिवचनं कथं न विरोत्स्यति । जीवपरयोर्मत्स्योदकवत्परमार्थभेदाङ्गीकारे तत्त्वमसिवाक्यविरोधः स्यादेवेत्यर्थः ॥ ४८ ॥

न तु वस्तुसतत्त्वविबोधनकृद्विनिवर्तयदप्रतिबोधमिदम् ।
सदुपासनकर्मविधानपरं तत एव मतं न विरोत्स्यति मे ॥ ४९ ॥

ननु वस्तुपरत्वे सति भेदं न सहेत तत्त्वमस्यादिवाक्यम् । वस्तुपरत्वं तु तस्य नास्त्येवोपासनापरत्वादित्याशङ्कते पूर्ववादी—न त्विति । इदं तत्त्वमस्यादिवाक्यमप्रतिबोधमज्ञानं निवर्तयद्वस्तुसतत्त्वविबोधनकृद्वस्तुस्वरूपप्रतिपादनपरं नास्त्येव । तर्हि किंपरमिति तत्राऽऽह—सदुपासनेत्यादि । ततः कारणात्तत्त्वमस्यादिवाक्यं मे मतं न विरोत्स्यति । वाक्यस्योपासनाविधिपरत्वादखण्डैकरसवस्तुपरत्वाभावात्तद्वाक्यमस्मन्मतं प्रतिक्षेप्तुं न क्षमत इति भावः ॥ ४९ ॥

मनआदिषु कारणदृष्टिविधिः प्रतिमासु च देवधियां करणम् ।
स्वमतिं त्वनपोह्य यथा हि तथा त्वमसीति सदात्ममतिर्वचनात् ॥५०॥

वाक्यस्योपासनाविधिपरत्वं दृष्टान्तेन साधयति—मनआदिष्विति । 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' 'अन्नं ब्रह्मेत्युपास्ते' 'आकाशं ब्रह्मेत्युपास्ते' इत्यादिश्रुत्या मनआदिषु कारणदृष्टिविधिः, मनआदौ कारणब्रह्मोपास्तिर्विधीयते। यथा च प्रतिमासु भगवल्लाञ्छनलाञ्छितासु स्वमतीरनपोह्याधिष्ठानबुद्धिमपरित्यज्य देवधियां करणं देवत्वधियामारोपणम्, तद्वदत्रापि त्वमसीति वचनात्तत्त्वमसीतिवाक्येनेह त्वंपदार्थभूते जीवे जीवत्वमपरित्यज्य सदात्ममतिर्विधीयते सद्रूपब्रह्मदृष्टिर्विधीयते । एकत्वपरत्वे प्रमाणान्तरविरोधात् । 'तदहमस्मि' इति चेतोधारणैव विधीयत इत्यर्थः ॥ ५० ॥

अथवा त्वमितिध्वनिवाच्यमिदं सदसीति वदेद्वचनं गुणतः ।
विभयं पुरुषं प्रवदन्ति यथा मृगराडयमीश्वरगुप्त इति ॥ ५१ ॥

तत्त्वमसिवाक्यमुपासनापरमित्येकं पक्षं प्रदर्श्येदानीं गुणवादपरमथवा स्तुतिपरमथवा विपरीतबोधकमिति पक्षान्तराण्युदाहरति श्लोकद्वयेन—अथवेत्यादिना । इदं तत्त्वमसीतिवचनं त्वमितिध्वनिवाच्यं जीवं गुणतो गुणवादेन सदसीति वदेत् । गुणवादपरत्वे दृष्टान्तमाह—विभयमिति । विभयं निर्भयं पुरुषं दृष्ट्वाऽयमीश्वरगुप्तो मृगराडयं देवदत्तः सिंह इति प्रवदन्ति तद्वदित्यर्थः ॥ ५१ ॥

यदि वा स्तुतये सदसीति वदेन्मघवानसि विष्णुरसीति यथा ।
त्वमितिश्रुतिवाच्यसतत्त्वकतामथवा सत एव वदेद्वचनम् ॥ ५२ ॥

स्तुतिपरत्वं दर्शयति—यदि वेति। यथा दातारं पुरुषं 'मघवानसि' 'विष्णुरसि' इति स्तुवन्ति याचकास्तथाऽत्रापि स्तुतये स्तुत्यर्थं जीवं स्तोतुं सदसीति वदेद्वाक्यमित्यर्थः । विपरीतबोधकत्वं दर्शयति—त्वमिति । अथवा तत्त्वमसीति वचनं सतः सद्रूपस्य ब्रह्मणस्त्वमितिश्रुतिवाच्यसतत्त्वकतामेव त्वंपदवाच्यजीवात्मकतामेव वदेत् । ब्रह्मणो जीवत्वमेव बोधयेद्वाक्यमित्यर्थः ॥ ५२ ॥

यदि तत्त्वमिति ध्वनिनाऽभिहितः परमात्मसतत्त्वक एव सदा ।
किमिति स्वकमेव न रूपमवेत्प्रतिबोध्यत एव यतो वचनैः ॥ ५३ ॥

ननु किमनया क्लिष्टकल्पनया स्वारसिकं जीवस्य ब्रह्मत्वमेव किमिति न बोधयेद्वाक्यमिति तत्राऽऽह—यदीति । तत्त्वमसिवाक्ये त्वमितिध्वनिनाऽभिहितो जीवः सदा परमात्मसतत्त्वक एव यदि तर्ह्येष जीवः स्वकं रूपं किमिति नावेत् । स्वस्य स्वाभाविकं ब्रह्मत्वं किमिति न जानाति । न तु स्वारसिकं ब्रह्मत्वम् । किंतु प्रतिबोध्यत एव यतस्ततः कारणादस्य ब्रह्मत्वं स्वारसिकं न भवतीत्यर्थः ॥ ५३ ॥

अत एव हि जीवसदात्मकतां नहि तत्त्वमसीति वदेद्वचनम् ।
यदपीदृशमन्यदतो वचनं तदपि प्रथयेदनयैव दिशा ॥ ५४ ॥

उक्तमर्थं निगमयति पूर्ववादी— अत एवेति । अत एव वाक्यस्योपासनापरत्वादेव तत्त्वमसीतिवचनं जीवस्य सदात्मकतां न वदेद्ब्रह्मत्वं न बोधयेत् । हि यस्मादेवं तस्मादतोऽन्यदपीदृशं यद्वचनं महावाक्यं तदप्यनयैव दिशा प्रथयेदुन्नयेदित्यर्थः ॥५४॥

त्वदुदाहृतवाक्यविलक्षणता वचनस्य हि तत्त्वमसीति यतः ।
अत एव न दृष्टिविधानपरं सत एव सदात्मकतागमकम् ॥ ५५ ॥

तत्त्वमसिवाक्यस्योपासनावाक्यवैलक्षण्याद्वस्तुपरत्वमेवेति साधनायाऽऽह सिद्धान्ती— त्वदुदाहृतेति । तत्त्वमसीतिवचनस्य त्वदुदाहृतवाक्यविलक्षणता त्वयोदाहृतात् ‘ मनो ब्रह्म ’इत्यादिवाक्याद्विलक्षणताऽस्तीति यतस्ततः कारणादिदं वचनं दृष्टिविधानपरमुपासनाविधिपरं न भवेत । किं तर्हि सत एव सदात्मकतागमकं जीवात्मना प्रविष्टस्य सत एव सदात्मकतागमकं ब्रह्मत्वबोधकमित्यर्थः ॥ ५५ ॥

इतिशब्दशिरस्कपदोक्तमतिर्विहिता मनआदिषु तैर्वचनैः ।
न विधानमिहास्ति तथा वचने सुविलक्षणमेतदतो वचनात् ॥ ५६ ॥

तत्त्वमसिवाक्यस्योपासनावाक्याद्वैलक्षण्यं साधयति— इतिशब्देति । इतिशब्दशिरस्कपदोक्ता मतिर्विहिताऽस्ति । मनआदिषु मनआदित्यादिषु । तैर्वचनैः ‘ मनो ब्रह्म ’ इत्यादिभिर्वाक्यैः । इह वचने तु तथा विधानं नास्तीति । अस्मिन् तत्त्वमस्यादिवाक्ये । तथा विधानमितिशब्दशिरस्कपदेनोक्तदृष्टिविधानं नास्तीति यस्मात्तस्मात् । अतो वचनात् ‘ मनो ब्रह्म ’ इत्यादिवाक्यात् । एतत्तत्त्वमसिवाक्यम् । सुविलक्षणं सुतरां विलक्षणमित्यर्थः ॥ ५६ ॥

मनसो वियतः सवितृप्रभृतेः प्रवदन्ति न तानि सदात्मकताम् ।
मनआदि हि मुख्यमुपास्यतया प्रवदन्ति यतोऽक्षरदृष्टियुतम् ॥ ५७ ॥

यद्युपासनावाक्यवैलक्षण्यात्तत्त्वमसिवाक्यं वस्तुनिष्ठं तर्हि ‘ मनो ब्रह्म ’ इत्यादीन्यपि वस्तुनिष्ठान्येवेति तत्राऽऽह— मनस इति । सवितृप्रभृतेः सवितारमारभ्य मनसो वियतश्च तानि ‘ मनो ब्रह्म ’ इत्यादीनि सदात्मकतां सद्रूपब्रह्मात्मकतां न प्रवदन्ति मनआदेर्ब्रह्मात्मकतां न प्रवदन्ति न बोधयन्ति । तर्हि किं कुर्वन्तीत्यत्राऽऽह— मनआदीति । मुख्यं मनआदि मनआदित्यादिकमक्षरदृष्टियुतं ब्रह्मदृष्टियुतमुपास्यतया प्रवदन्ति फलान्तरमुद्दिश्येत्यर्थः ॥ ५७ ॥

करको न मृदः पृथगस्ति यथा मनआदि सतोऽस्ति तथा न पृथक् ।
इति वस्तुसतत्त्वकता तु यथा विधिशब्द इतिश्च तथा तु वृथा ॥५८॥

ननु ब्रह्ममनसोः प्रकृतिविकृतिभावान्मृत्करकयोरिव तादात्म्योपदेशो वस्तुपर एव कस्मान्न भवतीत्याशङ्कयाऽऽह—करक इति । यथा करको घटादिकं कार्यं स्वकारणान्मृदः सकाशात्पृथङ्नास्ति तथा मनआदित्यादिकमपि कारणभूतात्सतो ब्रह्मणः सकाशात्पृथग्व्यतिरिक्ततया नास्तीत्येवं वस्तुसतत्त्वकता तु वस्तुपरता तु यथा त्वयाऽभ्युपगम्यते तथा 'मनो ब्रह्मेत्युपासीत' इत्यस्मिन् वाक्ये विधिशब्द इतिश्च वृथा भवेत् । तस्मात् 'मनो ब्रह्म' इत्यादिवाक्यस्य वस्तुपरत्वमयुक्तं किंतूपासनापरत्वमेवेत्यर्थः ॥ ५८ ॥

मनआदिसमानविभक्तितया विधिशब्दमिति च विहाय यदि ।
जनकेन सता सहयोगमियादनृतं तदिति स्फुटमुक्तमभूत् ॥ ५९ ॥

ननु विधिशब्दमिति च विहाय मनो ब्रह्मेत्यादिपदद्वयं समानविभक्तिकतया सामानाधिकरण्यं गमिष्यति । ततश्च वस्तुपरत्वमेवेति तत्राऽऽह—मनआदीति । समानविभक्तितयैकविभक्तितया मनआदित्यादिकं, विधिशब्दमुपासीतेत्यादिकमितीतिशब्दं च विहाय जनकेन स्वकारणेन सता ब्रह्मणा सह योगमियात्सामानाधिकरण्यं गच्छेद्यदि तर्हि तन्मनआद्यनृतमसदिति स्फुटमुक्तमभूत् । इदानीं मनआदि जगन्मिथ्येति त्वदुक्तः सिद्धान्तः स्यात्स च तव नेष्टोऽपसिद्धान्तप्रसङ्गादित्यर्थः ॥५९॥

ननु जीवसतोरपि तत्त्वमिति स्फुटमेकविभक्त्यभिधानमिदम् ।
कथमस्य शरीरभृतोऽनृतता न भवेदविभक्तविभक्तियुजः ॥ ६० ॥

ननु ब्रह्मसामानाधिकरण्ये यदि मनआदेरनृतत्वं भवेत्तर्हि जीवस्यापि तत्त्वमसिवाक्ये ब्रह्मसामानाधिकरण्यश्रवणादनृतत्वं कथं न भवेदिति पूर्वपक्षी चोदयति—नन्विति । जीवसतोरपि तत्त्वमित्येकविभक्त्यभिधानमभिन्नविभक्त्यभिधानं स्फुटं प्रतीयते । ततः कारणादविभक्तविभक्तियुजोऽभिन्नविभक्तिकत्वंपदबोध्यस्यास्य शरीरभृतो जीवस्य मनआदिवदनृतता कथं न भवेत् । भवेदेवानृतता । जीवस्यानृतत्वे तस्याविकृतब्रह्मात्मकत्वं श्रुतिसिद्धं न सेत्स्यतीत्यर्थः ॥ ६० ॥

प्रकृतेरभिधानपदेन यथा विकृतेरभिधानमुपैति युजाम् ।
अनृतत्वमतिस्तु तथा विकृतौ मृदयं घट इत्यभिधासु यथा ॥ ६१ ॥

न ब्रह्मसामानाधिरण्यमनृतत्वप्रयोजकमित्याह सिद्धान्ती—प्रकृतेरिति । यथा प्रकृतेरभिधानपदेन कारणवाचकपदेन विकृतेरभिधानं कार्यवाचकं पदं युजामुपैति

सामानाधिकरण्यं प्राप्नोति तथा विकृतावनृतत्वमतिर्भवति कार्ये मिथ्यात्वबुद्धिर्भवति । अत्र यथातथाशब्दाभ्यां पूर्वार्धोत्तरार्धार्थयोर्हेतुहेतुमद्भाव एव ग्राह्यः । तत्र दृष्टान्तमाह— मृदयं घट इत्यभिधासु यथेति । मृदयं घटः, तन्तुरयं पटः, कनकमिदं रुचकमिति कार्यकारणपदयोः सामानाधिकरण्ये कार्येऽनृतत्वमतिर्भवति । तद्वदत्रापि यदि जीवपरयोः कार्यकारणभावः स्यात्तर्हि जीवस्यानृतत्वं भवेदेव न तु तदस्तीति सिद्धान्तिनोऽभिप्रायः ॥ ११ ॥

विकृतित्वमवादि मनःप्रभृतेर्बहुशः श्रुतिषु प्रकृतेस्तु सतः ।
अत एव समानविभक्तितया मनआदि सुवेद्यमसत्यमिति ॥ ६२ ॥

ननु कार्यकारणयोः सामानाधिकरण्ये कार्येऽनृतत्वमतिर्भवतु मनआदेस्तु सृष्टिप्रकरणे कार्यत्वाश्रवणादनृतत्वं न भवेदित्याशङ्क्य मैवं तव बाधिर्येणाश्रवणादित्याह सिद्धान्ती—विकृतित्वमिति । ‘ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ’ ‘ अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः ’ इत्यादिश्रुतिषु मनःप्रभृतेर्मनःप्रमुखस्य जगतो बहुशो बहुवारं सतः प्रकृतेर्विकृतित्वमवादि मनसः सद्रूपब्रह्मकार्यत्वमभाणि । यत एवमतः कारणात्समानविभक्तितया मनआद्यनृतमिति सुवेद्यं मनआदेः कार्यत्वश्रवणाद्ब्रह्मसामानाधिकरण्ये मनआद्यनृतं भवेदित्यर्थः ॥ १२ ॥

जनितत्वमवादि नहि श्रुतिभिर्जनकेन सताऽस्य शरीरभृतः ।
मनआदिविकारविलक्षणतां प्रतियन्ति शरीरभृतस्तु ततः ॥ ६३ ॥

तर्हि जीवस्यापि मनआदिवद्ब्रह्मकार्यत्वश्रवणादनृतत्वं कुतो न भवेत् । ‘ यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे देवाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति’ इति हि जीवानामुत्पत्तिः श्रूयत इत्याशङ्क्य नेयं जीवस्य स्वरूपेणोत्पत्तिः किंतु विशिष्टरूपेणेत्यभिप्रायेणाऽऽह सिद्धान्ती—जनितत्वमिति । अस्य शरीरभृतः शरीरोपाधिकस्य जीवात्मनो जनकेन सता निखिलजगत्कारणेन ब्रह्मणा जनितत्वमुत्पादितत्वं श्रुतिभिर्नावादि न गदितम् । हि यस्मादेवं ततस्तस्मात्कारणाच्छरीरभृतो मनआदिविकारविलक्षणतां मनआदिकार्यवैलक्षण्यं विद्वज्जनाः प्रतियन्ति जानन्ति । तस्मान्मनआदिवज्जीवस्य ब्रह्मसामानाधिकरण्येऽप्यनृतत्वं न भवेदित्यर्थः ॥ १३ ॥

यदजीजनदम्बरपूर्वमिदं जगदक्षरमीक्षणविग्रहकम् ।
प्रविवेश तदेव जगत्स्वकृतं स च जीवसमाख्य इति श्रुतयः ॥ ६४ ॥

जीवस्य ब्रह्मविकारत्वं श्रुतिषु प्रसिद्धं न चेत्किमात्मकत्वं तर्हि प्रसिद्धमित्यपेक्षायामविकृतब्रह्मात्मकत्वमेवेत्याह सिद्धान्ती यदिति 'तदैक्षत-तत्तेजोऽसृजत' 'स ईक्षांचक्रे—स प्राणमसृजत' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'प्रज्ञानं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेरीक्षणविग्रहकं यदक्षरमक्षराख्यं ब्रह्माम्बरपूर्वकमाकाशपुरःसरमिदं जगदजीजनदुदपादयत्, तदेवाक्षराख्यं ब्रह्म स्वकृतं जगत्प्रविवेश प्राविशत्। यस्मादेवं तस्मात्स परमात्मैव जीवसमाख्यो जीवसंज्ञां प्राप्त इति 'तत् सृष्ट्वा। तदेवानुप्राविशत्' इत्याद्याः श्रुतयः प्रवदन्तीत्यर्थः॥ ६४॥

परमात्मविकारविभक्तमतिर्न भवत्यत एव शरीरभृतः।
यत एव विकारविभिन्नमतिर्न भवत्यत एव मृषात्वमतिः॥ ६५॥
अविभक्तविभक्त्यभिधानकृता परमात्मपदेन शरीरभृतः।
न भवेदिह तत्त्वमसिप्रभृतौ लवणं जलमित्यभिधासु यथा॥ ६६॥

एवं श्रुतिप्रामाण्याज्जीवस्याविकृतब्रह्मात्मकत्वे सिद्धे प्रकृते किमायातमित्यपेक्षायां जीवः परमात्मैवेत्यनेन हेतुना विभक्तबुद्धिर्न भवेदित्यायातमित्याह—परमात्मेति। अत एवाविकृतब्रह्मात्मत्वादेवास्य शरीरभृतो परमात्मविकारविभक्तमतिर्न भवति। परमात्मविकारत्वेन ब्रह्मकार्यत्वेन हेतुना ब्रह्मणः सकाशाज्जीवो विभक्त इति बुद्धिर्न भवति। जीवस्य ब्रह्मकार्यत्वाभावादित्यर्थः। ततः किं तव सिद्धमिति तत्राऽऽह—यत एवेत्यादिना सार्धश्लोकेन। यत एव विकारत्वेन विभिन्नमतिर्न भवत्यत एवेह तत्त्वमसिप्रभृतौ तत्त्वमस्यादिवाक्ये शरीरभृतः परमात्मपदेनाविभक्तविभक्त्यभिधानकृता मृषात्वबुद्धिर्न भवेत्। ब्रह्मसामानाधिकरण्ये सति जीवेऽनृतत्वबुद्धिर्न भवेत्। अत्र व्यतिरेकदृष्टान्तमाह—लवणं जलमित्यभिधासु यथेति। यथा लवणजलयोः कार्यकारणभावाज्जलकार्यस्य लवणस्यानृतत्वं भवति तथाऽस्य जीवस्यानृतत्वं न भवेत्। जीवब्रह्मणोः कार्यकारणत्वाभावादित्यर्थः॥ ६५॥ ६६॥

परमात्मविकारनिराकरणं कृतमस्य शरीरभृतस्तु यतः
परमेश्वररूपविलक्षणता न मनागपि देहभृतोऽस्ति ततः॥ ६७॥

ब्रह्मसामानाधिकरण्ये मृषात्वं न भवतीति साधयितुं जीवस्य विकारत्वं निराकृतम्। अत एव जीवस्य सर्वप्रकारेण ब्रह्मविलक्षणता निराकृतेत्याह सिद्धान्ती—परमात्मेति। अस्य शरीरभृतः परमात्मविकारत्वनिराकरणं कृतं यतस्तत एवास्य शरीरभृतो जीवपदार्थस्य परमेश्वररूपविलक्षणता मनागपीषदपि नास्ति। जीवस्याविकृतब्रह्मात्मकत्वश्रवणादित्यर्थः॥ ६७॥

ननु जीवसतोरणुमात्रमपि स्वगतं न विशेषणमस्ति यदा ।
यद तत्त्वमसीति तदा वचनं किमु वक्ति तथैष त इत्यपि च ॥ ६८ ॥

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' । 'नेह नानाऽस्ति किंचन' इति भेदस्य निरस्तत्वाज्जीवपरयोरीषदपि भेदो नास्तीत्युपश्रुत्य पूर्ववादी चोदयति—नन्विति । जीवपरयोरणुमात्रमपि स्वगतं विशेषणं भेदकं नास्ति यदा, तर्हि तत्त्वमसीति वचनं किमु वक्ति बोधयति । तथा एष त इत्यपि च 'एष त आत्माऽन्तर्याम्यमृतः' इति वचनं किमु वक्ति । जीवसतोरीषदपि भेदाभावे पूर्वमेवाभेदस्य सिद्धत्वादुपदेशानर्थक्यमिति पूर्ववादिनोऽभिप्रायः ॥ ६८ ॥

स्वगतं यदि भेदकमिष्टमभूदणुमात्रमपीश्वरदेहभृतोः ।
अपनेतुमशक्यमदो वचनैरमुनाऽस्य पृथक्त्वनिषेधपरैः ॥ ६९ ॥

एतच्चोद्यं परिहरति सिद्धान्ती—स्वगतमित्यादिना । ईश्वरदेहभृतोरणुमात्रमपि स्वगतं भेदकमिष्टमभूद्यदि, जीवपरयोः परमार्थतः स्वगतभेद इष्यते यदि, तर्ह्यदो भेदकममुना परमात्मनाऽस्य जीवस्य पृथक्त्वनिषेधपरैस्तत्त्वमस्यादिवाक्यैरपनेतुं निराकर्तुमशक्यमिति ॥ ६९ ॥

इह यस्य च यो गुण आत्मगतः स्वत एव न जातु भवेत्परतः ।
वचनेन न तस्य निराकरणं क्रियते स गुणः सहजस्तु यतः ॥७०॥

जीवपरयोः परमार्थतो भेदाङ्गीकारे तस्य वचनेन निराकरणमशक्यमित्युक्तम् । इदानीं पारमार्थिकभेदनिराकरणासंभवं साधयति—इहेत्यादिना । इह व्यवहारदशायां यस्य पदार्थस्य यो गुण आत्मगतः स्वाभाविक एव भवति स गुणः स्वत एव तस्मिन्पदार्थे भवेत् । जातु कदाचिदपि स परतो न भवेत् । स्वाभाविकत्वेनानैमित्तिकत्वात् । तस्य च स्वाभाविकगुणस्य निराकरणं वचनेन न क्रियते निराकरणमशक्यमित्यर्थः । अशक्यतायां हेतुमाह—सहज इति । स भेदाख्यो गुणः सहजो यत उपाधिकृतो न भवेद्यतः, ततः कारणाद्वचनेन निराकर्तुमशक्य इत्यर्थः ॥७०॥

वचनं त्ववबोधकमेव यतस्तत एव न वस्तुविपर्ययकृत् ।
नहि वस्त्वपि शब्दवशात्प्रकृतिं प्रजहात्यनवस्थितिदोषभयात् ॥७१॥

ननु वचनेन किमिति सहजगुणनिराकरणं न संभवति नहि वचनस्यातिभारो नामेति तत्राऽऽह—वचनमिति । अज्ञातार्थाधिगमकतया प्रमाणभूतं तत्त्वमस्यादिवचनमवबोधकमेव । प्रमाणानामभिव्यञ्जकत्वस्वाभाव्यात् । अतो यथावस्थितप्रमेयावबोधकत्वबोधकमेव न तु कारकमित्यर्थः । ननु वस्तु स्वयमेव शब्दसामर्थ्यात्स्वभावनि-

त्वमपि गुणं परित्यजतीति चेत्तत्राह—नहीति । यस्त्वपि शब्दवशाच्छ्रुतिसामर्थ्या-त्प्रवृत्तिं प्रकृतिसिद्धं भेदं न जहाति न परित्यजति । कुत इत्यत आह—अनव-स्थितिविरोधप्रसङ्गादिति । स्वस्यानवस्थानदोषप्रसङ्गात्सहजस्य निराकरणे स्वस्य नाशा-पत्तेरित्यर्थः । तथा चोक्तं सुरेश्वराचार्यैः—' नहि स्वभावो भावानां व्यावर्त्येतौष्ण्यवद्रवेः । स्वभावाद्विनिवृत्तोऽर्थो निःस्वभावः खपुष्पवत् ' इति । तस्माद्भेदस्य सहजत्वे तस्य निवृत्तिर्न संभवतीत्यर्थः ॥ ७१ ॥

यत एवमतो विषयस्य गुणं विषयेण सहात्मनि मूढधिया ।
अधिरोपितमप्स्विव भूमिगुणं प्रतिषेधति तत्त्वमसीति वचः ॥ ७२ ॥

भेदस्यौपाधिकत्वे तु तस्य वचनेन निवृत्तिः संभवतीति दर्शयति—यत एव-मिति । स्वाभाविकभेदस्य निवृत्तिर्न संभवतीत्येवं यतोऽतः कारणान्मूढधियाऽविवे-किना विषयेण सह विज्ञात्मना बुद्ध्यादिधर्मिणा सहाऽऽत्मनि चिदात्मकेऽधिरोपितम-ध्यस्तं तद्धर्मं विषयस्य गुणं बुद्ध्यादेर्गुणं भेदं तत्त्वमसीति वचः प्रतिषेधति निरस्यति । आरोपितस्य निषेध्यत्वे दृष्टान्तं दर्शयति—अप्स्विवेति । भूमिगुणं गन्धमप्सु, आरोपितं सन्तं यथा प्रतिषेधति । पृथिव्या एव हि गन्धवत्त्वं नापाम् । तथा च ' तत्त्वमसि ' ' अहं ब्रह्मास्मि ' ' अस्थूलमनण्वह्रस्वमदीर्घं ' ' अशब्दमस्पर्शम् ' इत्यादिकं वचनमात्मन्यविवेकेनाऽऽरोपितात्तद्धर्मनिषेधमुखेनाखण्डैकरसवस्तुपरमि-त्यर्थः ॥ ७२ ॥

अत एव न दृष्टिविधानपरं गुणवादपरं च न तद्वचनम् ।
स्तुतिवाद्यपि नैतदुपास्यतया विधिरत्र न देहभृतोऽस्ति यतः ॥ ७३ ॥

यस्मादेवं वाक्यस्य वस्तुपरत्वं सिद्धं तस्मादुपासनापरत्वं नास्तीति सिद्धमि-त्याह—अत एवेति । अत एव वाक्यस्याखण्डवस्तुपरत्वादेव तद्वचनं न दृष्टि-विधानपरं नोपासनाविधिपरं भवेत् । तथा गुणवादपरम् ' आदित्यो यूपः ' ' यज-मानः प्रस्तरः ' इतिवदपि गुणबोधनपरं न भवेत् । स्तुतिवादि च ' मघवानसि ' ' देवोऽसि ' इत्यादिवदपि स्तुतिपरं न भवेत् । मुख्यार्थसंभवे गौणार्थकल्पना या अनुचितत्वादिति भावः । उपासनापरत्वाभावे हेतुमाह—उपास्यतयेति । अत्रा-सिन्वाक्ये उपास्यत्वे देहभृतो जीवस्य ब्रह्मत्वेनोपास्यतया विधिर्नास्ति लिङ्लोटा-दिकं नास्ति यतो ततः कारणादुपासनापरत्वं न भवेदित्यर्थः ॥ ७३ ॥

सत एव हि नाम जगत्प्रकृतेरुपधानवशादिह जीव इति ।
अत एव न जीवसतस्त्वपरं प्रकृतस्य सतः प्रतिपादयति ॥ ७४ ॥

तत्त्वमस्यादिवाक्यस्य विपरीतबोधकत्वमपि नास्तीत्याह—सत एवेति । जगत्प्रकृतेः सत एव जगत्कारणस्य ब्रह्मण एव, उपधानवशात्कल्पितबुद्ध्याद्युपाधिवशाज्जीव इति इह लोके व्यवहारो भवति । अत एव प्रकृतस्य सतः षष्ठाध्यायोपक्रमे 'सदेव सोम्येदमग्र आसीत्' इति जगत्कारणत्वेन प्रस्तुतस्य ब्रह्मणो जीवसतत्त्वकतां जीवरूपतां न प्रतिपादयति । किं तर्हि जीवसंज्ञां प्राप्तस्य ब्रह्मणः स्वाभाविकं ब्रह्मस्वरूपं बोधयतीति ॥ ७४ ॥

यदि जीवसतत्त्वकतां गमयेदणिमादिगुणस्य जगत्प्रकृतेः ।
अणिमादिगुणात्मिकताऽस्य मृषा यदि वाऽस्य शरीरभृदात्मकता ॥ ७५ ॥

वक्ष्यमाणहेतोश्च वाक्यस्य विपरीतबोधकता नास्तीत्याह—यदि जीवेति । अणिमादिगुणस्य जगत्प्रकृतेः सूक्ष्मत्वादिगुणकस्य ब्रह्मणो जीवसतत्त्वकतामेव वाक्यं गमयेद्यदि तर्ह्यस्य ब्रह्मणः 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इत्यादिकाद्वाक्यादणिमादिगुणात्मिकता मृषा स्यादपारमार्थिकी स्यात् । यदि वा तस्याः पारमार्थिकत्वं स्यात्तदाऽस्य ब्रह्मणः शरीरभृदात्मकता जीवसतत्त्वकता मृषा भवेत् । तस्मात्प्रकृतस्य सतो जीवसतत्त्वकतां न प्रतिपादयतीत्यर्थः ॥ ७५ ॥

इह संसृतिहेतुनिराकरणं कृतमस्य शरीरभृतोऽभिमतम् ।
परमेश्वरमात्मतया ब्रुवता वचनेन च तत्त्वमसीत्यमुना ॥ ७६ ॥

इतोऽपि विपरीतबोधकत्वं नास्तीत्याह—इहेति । परमेश्वरं परमात्मानमात्मतया ब्रुवता तत्त्वमसीत्यमुना वचनेनास्य शरीरभृतोऽभिमतमिष्टं संसृतिहेतुनिराकरणं संसारहेतोरज्ञानस्य निराकरणं कृतमिति यस्मात्तस्माद्विपरीतबोधकत्वं न संभवतीत्यर्थः ॥ ७६ ॥

त्वमसीति पदद्वयमेति युजां तदिति ध्वनिना सह तत्त्वमिति ।
क्रियया सह नामपदं समियान्निरपेक्षमुपैत्यनया हि युजाम् ॥ ७७ ॥

वाक्यस्थपदसंबन्धपर्यालोचनयाऽपि विपरीतबोधकत्वं न संभवतीत्याह—त्वमसीति । प्रथमं त्वमसीति पदद्वयं परस्परं युजां योगमेति । पश्चात्तदेव पदद्वयं तदिति ध्वनिना सह युजामेति । तत्त्वमिति तत्पदलक्ष्यं वस्तु त्वमसीति । कुतः कारणादेवं क्रमेण वाक्यस्थपदानां संबन्ध इत्यत्राऽऽह—क्रिययेति । नामपदं सुबन्तं पदं क्रियया सह समियाद्योगं प्राप्नुयात् । तदपि किंनिबन्धनं तत्राऽऽह—निरपेक्षमिति । अनयाऽसीत्यादिकया क्रियया निरपेक्षं यथा भवति तथा वाक्यं युजामुपैति 'साकाङ्क्षं वचनमनर्थकम्' इति न्यायात् । क्रियापदे सति वाक्यं निरपेक्षं भवेदित्यर्थः ॥ ७७ ॥

नहि नामसहस्रमपि क्रियया रहितं किमपि प्रतिपादयति ।
प्रतिपादकमेषु लिङादि भवेद्विहितादिमतेर्जनकं हि यतः ॥ ७८ ॥

क्रियापदयुक्ते वाक्ये नामपदानां नैराकाङ्क्ष्यमित्येतत्साधयति—नहि नामेति । क्रियया रहितं चेद्वाक्यं तर्हि नामसहस्रमप्यनेकमपि सुबन्तं पदं किमपि न प्रतिपादयति कंचिदप्यर्थं बोधयितुं न पर्याप्तमित्यर्थः । तर्हि किं प्रतिपादकमिति तत्राऽऽह—प्रतिपादकमिति । एषु वाक्यस्थानां पदानां मध्ये लिङादि लिङ्लोट्तव्यादिकमस्ति, अस्मीत्यादिकं क्रियापदं वा कृत्यप्रत्ययान्तं वा कस्यचिदर्थस्य प्रतिपादकं भवेत् । तदपि कथमित्यत्राऽऽह—विहितादीति । विहितज्ञानस्य प्रतिषिद्धज्ञानस्य च । तथा च विधिनिषेधगोचरवस्तुविषयज्ञानस्य जनकं हि यस्मात्तस्मात्तत्त्वमस्यादिवाक्यस्थपदानां संबन्धपर्यालोचनया विपरीतबोधकत्वं न संभवतीत्यर्थः ॥ ७८ ॥

भगवानपि मध्यममेव यतो विनियच्छति युष्मदि नित्यमतः ।
प्रथमं त्वमसीति पदे समितश्चरमं त्वसिना समियात्तदिति ॥ ७९ ॥

पाणिनिर्भगवानपि मध्यममसि भवसीत्यादिकं मध्यमपुरुषपदं नित्यं नियमेन युष्मद्येव विनियच्छति ' युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ' इत्यनेन सूत्रेण । यस्मादेवं तस्मात्प्रथमं त्वमसीति पदे परस्परं समितः प्राप्नुतः । पश्चात्वासिनाऽसीतिपदेन तदितिपदं समियात्संयोगं प्राप्नुयात् ॥ ७९ ॥

पुरुषोऽभिहितस्त्वमसीति यदा किमसानि वदेति तदाऽभिमुखः ।
श्रवणाय भवेदणिमादिगुणं सदिति प्रकृतं तदसीति वदेत् ॥ ८० ॥

त्वमसीतिपदद्वयसंबन्धानन्तरमेव तदसीति पदद्वयसंबन्ध इत्यत्र युक्तिमाह—पुरुष इति । ' जीवाकारेण निर्दिष्टो ब्रह्माकारेण सर्वतः । अन्तर्बाहिः पूरितत्वादिति वा पुरुषो भवेत् ' इति वचनात्पूर्णत्वात्पुरुषः शिष्यत्वेनाभिहितो, गुरुणा यदा त्वमसीत्यभिहितस्तदा शिष्यः किमसानि, अहं किं भवानि वदेति श्रवणाभिमुखो भवेत् । तदनन्तरं गुरुः सदिति प्रकृतं ' सदेव सोम्य ' इत्यादिना प्रस्तुतं यद्ब्रह्म तदसीति वदेदुपदिशेदित्यर्थः ॥ ८० ॥

त्वमिति ध्वनिनाऽभिहितस्य यतस्तदितिश्रुतिवाच्यसदात्मकताम् ।
अवदद्वचनं तत एव सतो नहि जीवसतत्त्वकतां वदति ॥ ८१ ॥

वाक्यस्य विपरीतबोधकत्वासंभवमुपसंहरति—त्वमितीति । ' तत्त्वमसि ' इति वचनं त्वमितिध्वनिनाऽभिहितस्य त्वंपदलक्ष्यस्य प्रत्यगात्मनस्तदितिवाच्यसदात्मकतां तत्पदलक्ष्यब्रह्मात्मकतामवदद्बोधयतीत्यर्थः । इति यतस्तत एव सतः प्रकृतस्य

ब्रह्मणो जीवस्तत्त्वकतां न वदति न बोधयति । तस्मात्तत्त्वमसीति वचनं विपरीतबोधकं न भवेदित्यर्थः ॥ ८१ ॥

विषयाभिमुखानि(णि) शरीरभृतः स्वरसेन सदा करणानि यतः ।
स्वकमेष न रूपमवैति ततः प्रतिबोध्यत एव ततो वचनैः ॥ ८२ ॥

यदि जीवः सदाऽविकृतब्रह्मात्मकस्तर्ह्युपदेशं विनैवासौ किमिति सर्वदाऽविकृतब्रह्मात्मकत्वं न जानातीति यत्पूर्ववादिना पूर्वमुदीरितं तत्परिहरति—विषयेति । शरीरभृतो जीवस्य करणानीन्द्रियाणि स्वरसेन स्वभावत एव सदा विषयाभिमुखानि(णि) विषयप्रवणानीति यतस्ततः कारणादेष जीवः स्वकं स्वारसिकं ब्रह्मत्वं नावैति न जानाति यस्मात्तस्मात्तत्त्वमस्यादिभिर्वचनैः प्रतिबोध्यत एव । उपशान्तचित्तस्य शिष्यस्य ब्रह्मत्वं बोध्यत इत्यर्थः ॥ ८२ ॥

वचनं च पराञ्चिपुरःसरकं बहु वैदिकमत्र तथा स्मरणम् ।
विषयेषु च नावमिवाम्भसि यन्मनसेन्द्रियरश्मिविनिग्रहवत् ॥ ८३ ॥

गुणत्रयात्मकानामिन्द्रियाणामनात्मविषयत्वादात्मनो ब्रह्मत्वमुपदेशमन्तरेण जीवो न जानीयादिति युक्तिं दर्शयित्वेदानीं 'पराञ्चि खानि' इत्यादिश्रुतिवचनमप्यत्र प्रमाणमित्याह—वचनं चेति । अत्रास्मिन्नर्थे पराञ्चिपुरःसरकं 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इत्यादि बहु वैदिकं वचनं प्रमाणं, तथा स्मरणं स्मृतिश्च प्रमाणमित्यर्थः । स्मृतिं दर्शयत्युत्तरार्धेन । विषयेषु चरतामिन्द्रियाणामनु यन्मनो विधीयते बहिर्विषयं प्रति गच्छति तन्मनोऽस्य निर्भाग्यस्य पुरुषस्य प्रज्ञां हरति । तस्माद्यस्येन्द्रियाणि निगृहीतानि विषयेभ्यः प्रत्याहृतानि तस्य परमविरक्तस्य संन्यासिनो गुरूपदिष्टा विद्या सुप्रतिष्ठिता सफला भवेत् । 'इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि । तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः' इति परमगुरोरच्युतस्य वाक्यं 'विषयेषु च नावमिव' इति सूचितम् । तथा 'मनसैवेन्द्रियग्रामं विनियम्य' इति वाक्यम् 'मनसेव' इत्येनन सूचितम् । 'यदा संयच्छते रश्मीञ्ज्ञानानि मनसा सह । तदा प्रकाशते ह्यात्मा घटे दीपो ज्वलन्निव' इति वाक्यं 'इन्द्रियरश्मिविनिग्रहवत्' इति सूचितम् । इन्द्रियाणां पराग्विषयत्वादनाद्यज्ञानावच्छन्नत्वाच्च स्वरूपस्य जीवात्मनो ब्रह्मत्वमुपदेशमन्तरेण न ज्ञायत इत्यभिप्रायः ॥ ८३ ॥

इयता हि न देहभृतोऽस्ति भिदा परमात्मदृशेरिति वाच्यमिदम् ।
स्थितिकाल इहापि च सृष्टिमुखे सदनन्यतया श्रुत एष यतः ॥ ८४ ॥

ननु जीवस्त्रिष्वपि कालेषु यदि ब्रह्मस्वरूपस्तर्ह्येषा कल्पना स्यान्न तु तथेत्याशङ्क्य जीवस्य सर्वदा ब्रह्मत्वे श्रुतिं प्रमाणयति—इयतेति । इयता एतावन्मात्रेण त्रिषु कालेष्वपि जीवस्य ब्रह्मत्वे प्रमाणं त्वया न दृष्टमित्येतावन्मात्रेण देहभृत्त्वंपदार्थस्य चिदात्मनः परमात्मदृशेः सकाशाद्भिदाऽस्तीति न वाच्यम् । कुतो न वाच्यमिति तत्राऽऽह—स्थितिकाल इति । इह स्थितिकाले पूर्वं सृष्टिमुखे पुनः संहारकाले चेति त्रिष्वपि कालेषु जीवः सदनन्यतया श्रुतः ब्रह्मणः सकाशादनन्यतया श्रुतः ‘ब्रह्मैव सन् ब्रह्माप्येति’ इति ‘विमुक्तश्च विमुच्यते’ इति च । तस्माज्जीवः परमात्मनः सकाशादीषदपि भिन्नो न भवतीत्यर्थः ॥ ८४ ॥

द्वयमप्यविरोधि शरीरभृतो वचनीयमिदं रघुनन्दनवत् ।
उपदेशमपेक्ष्य सदाऽऽत्ममतिः परमात्मसतत्त्वकता च सदा ॥ ८५ ॥

तर्हि जीवस्य सर्वदा ब्रह्मत्वमुपदेशापेक्षत्वं च विरुद्धमित्याशङ्क्य तदुभयमविरुद्धमिति सदृष्टान्तमाह—द्वयमपीति । शरीरभृतो जीवस्येदं द्वयमप्यविरोधीति वचनीयं वक्तव्यम् । किं तद्द्वयमित्यपेक्षायां तद्द्वयं दर्शयति—उपदेशमित्यादिना । उपदेशमपेक्ष्य श्रुत्याचार्योपदेशापेक्षया सदाऽऽत्ममतिरात्मनो ब्रह्मत्वबुद्धिः सदा परमात्मकता च जीवस्य त्रिष्वपि कालेषु ब्रह्मता चेत्येतदुभयमविरुद्धं वक्तव्यम् । तत्र दृष्टान्तमाह—रघुनन्दनवदिति । यथा राघवस्य परमार्थतो विष्णुत्वेऽपि रावणवधार्थं मायया मानुषोपाधिवशात् ‘अहं दशरथपुत्रो राघवोऽस्मि’ इति शरीराभिमानी सन्स्वस्य विष्णुत्वं न जानाति । कालान्तरे तु रावणवधादूर्ध्वं ब्रह्मादयो देवाः समागत्य स्तुतिव्याजेन रामस्य विष्णुत्वं बोधितवन्तस्तदा स्वस्य विष्णुत्वं सम्यग्ज्ञातवान् रामः । तद्वदुपदेशापेक्षया जीवस्य ब्रह्मत्वं ज्ञायत इत्यर्थः ॥ ८५ ॥

सदुपासनमस्य विधेयतया वचनस्य मम प्रतिभाति यतः ।
अत एव न जीवसदात्मकतां प्रतिबोधयतीत्यवदद्यदसत् ॥ ८६ ॥

एवं वाक्यस्याखण्डैकरसवस्तुपरत्वमुपपाद्येदानीं सिंहावलोकनन्यायेनोपासनाविधिपरत्वपक्षमनूद्य दूषयति—सदुपासनमिति । ‘अस्य तत्त्वमसिवचनस्य ‘सदुपास्स्व’ इति सदुपासनं विधेयतया मम प्रतिभाति । अत एव च जीवस्य सदात्मकतां ब्रह्मात्मकतां न प्रतिबोधयति’ इति यत्पूर्ववाद्यवददवोचत्तदसदयुक्तम् ॥ ८६ ॥

सदुपास्स्व इति श्रुतिरत्र न ते तदसि त्वमिति श्रुतिरत्रमियम् ।
यत एवमतो न विधित्सितता सदुपासनकर्मण इत्यमृषा ॥ ८७ ॥

कुतः कारणादुपासनापरत्वमयुक्तमिति चेद्विधिपदाश्रवणादित्याह सिद्धान्ती—सदुपास्स्वेति । अत्र तत्त्वमसिवाक्ये सदुपास्स्वेति विधिपदश्रवणं नास्ति । तर्हि किम-

त्वेत्यत्राह—तदसीति । तदसि त्वमित्यामिदं वर्तमानोपदेशिनी श्रुतिर्यतस्तः करणात्मदुपासनकर्मणो विधित्सितता नास्त्येवेत्येतदमृषा मृषा न भवेत् । तस्मादुपासनाविधिपरं न भवदित्यर्थः ॥ ८७ ॥

यदि तस्य कुतश्चिदिहाऽऽनयनं क्रियते तदनर्थकमेव भवेत् ।
पुरुषेण कृतस्य यतः श्रुतिता न भवेदिति वेदविदां स्मरणम् ॥ ८८ ॥

यद्येवं विधिपदाश्रवणादुपासनापरत्वं नास्ति तर्हि विधिपदमध्याहरिष्यत इति तत्राऽऽह—यदीति । तस्य विधिपदस्य कुतश्चिद्वाक्यादिहानयनं क्रियते यदि विधिपदमध्याहरिष्यते यदि तर्हि तद्विधिपदमनर्थकमेव भवेत् । विधिपदाध्याहारे तस्याऽऽनर्थक्यं कथमित्यपेक्षायामाह—पुरुषेणेति । पुरुषेण कृतस्य विधिपदस्य श्रुतिता न भवद्वेदस्यापौरुषेयत्वादिति वेदविदां स्मरणम् । तस्माद्विधिपदाध्याहारो न युक्त इत्यर्थः ॥ ८८ ॥

किमरे पुरुषं प्रतिबोधयितुं स्वकमर्थमशक्तमिदं वचनम् ।
यदतोऽन्यत आनयनं क्रियते भवता श्रवणेन विनाऽपि विधेः ॥ ८९ ॥

ननु तथाऽपि वाक्यपरिपूर्तिहेतुत्वादध्याहारस्याऽऽनर्थक्यं कथं भवेदित्यत्राऽऽह—किमरे इति । अरे इति नीचसंबोधनम् । इदं तत्त्वमसिवचनं स्वकमर्थं प्रत्यग्ब्रह्मणोरेकत्वं पुरुषमधिकारिणं बोधयितुमशक्तमसमर्थं किं येनासामर्थ्येन श्रवणेन विनाऽपि विधेरानयनं क्रियते । तथा वाक्यमसमर्थं नास्तीति । तस्माद्विधिपदाध्याहारमन्तरेण वाक्यस्यार्थपूर्णत्वादध्याहारापेक्षा नास्तीत्यर्थः ॥ ८९ ॥

श्रुतहानिरिहाश्रुतकल्पनमपि श्रुतिवित्समयो न भवेत्तु यतः ।
श्रुतिभक्तिमता श्रुतिवक्त्रगतं ग्रहणीयमतो न तु बुद्धिवशात् ॥ ९० ॥

पुनरपि विधिपदाध्याहारो न युक्त इत्यत्र हेत्वन्तरमाह—श्रुतहानिरिति । इह विधिपदाध्याहारपक्षेऽयमपि महान् दोषः स्यात् । श्रुतहानिर्यथाश्रुतार्थपरित्यागोऽश्रुतकल्पनमप्यश्रुतार्थकल्पना चेति । अयं च दोषः श्रुतिवित्समयो न भवेद्वेदार्थविदां सिद्धान्ते नाऽऽश्रीयते । यत एवमतः कारणाच्छ्रुतिभक्तिमता श्रुतौ गौरवाच्छ्रुतिवक्त्रगतं श्रुतिमुखादुद्गतं यत्तदेव ग्रहणीयं न तु बुद्धिवशात्स्वमनीषया किंचिदपि कल्पयितव्यमित्यर्थः ॥ ९० ॥

पुरुषस्य शरीरगतात्ममतिं मृतिसंभवहेतुमनर्थकरीम् ।
अपनीय सदात्ममतिं दधती महते पुरुषस्य हिताय भवेत् ॥ ९१ ॥

एवं तावत्तत्त्वमसिवाक्ये विधिपदाश्रवणाद्विधिपदाध्याहारस्य चान्यत्वाद्वाक्यमुपासनाविधिपरं न भवति किंत्वखण्डैकवस्तुपरमिति साधितम् । तत्रेयमाशङ्का–तत्त्वमसिवाक्यस्य वस्तुपरत्वे वस्तुनो हानोपादानाविषयत्वात्पुरुषार्थरहितं तत्प्रसज्यते । विधिपरत्वे तु पुरुषप्रवृत्तिः प्रयोजनं लभ्यते । प्रयोजनस्य प्रवृत्तिनिवृत्तिसाध्यत्वादिति । तदेतदयुक्तमिति सिद्धार्थपरत्ववादिनो मन्यन्ते । वस्तुपरत्वेऽप्यशेषानर्थमूलाज्ञाननिवृत्तिः परमपुरुषार्थो विद्यत एवेति । तदाह–पुरुषस्येति । पुरुषस्यानेकानर्थकरीं मृतिसंभवहेतुं शारीरगतात्ममतिमपनीय पुरुषस्य जीवस्य सदात्ममतिं दधती बोधयन्ती श्रुतिर्महते हिताय भवेत्, वाक्यजन्यज्ञानस्य मोक्षहेतुत्वादित्यर्थः ॥९१॥

विनिवर्तत एव शरीरगता विपरीतमतिः पुरुषस्य तदा ।
वचनेन तु तत्त्वमसीति यदा प्रतिबोध्यत एष त इत्यपि च ॥ ९२ ॥

नन्वेवमपि तत्त्वमसिवाक्यस्य पुरुषार्थहेतुत्वमनुपपन्नं महता प्रयत्नेनाहर्निशं तत्त्वमसिवाक्यमसकृच्छ्रुतवतामप्यस्माकमनर्थहेत्वज्ञाननिवृत्तेरदर्शनादित्याशङ्क्य पापाक्रान्तबुद्धीनां कुतार्किकाणामेवैतन्न तु भगवद्भक्तानां परमहंसानाम् । तेषां क्षीणकल्मषत्वात् । सकृच्छ्रवणादप्यनुभवपर्यन्तज्ञानोत्पत्तिसंभवादित्यभिप्रायेणाऽऽह सिद्धान्ती–विनिवर्तत इति । यस्मादधिकारिणः प्रमितिजनको वेदस्तस्मात् 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'एष त आत्मा सर्वान्तरः' 'प्रज्ञानं ब्रह्म' इत्यादिमहावाक्यैर्यदा शिष्यत्वेनाभिमतः पुरुष एवं प्रतिबोध्यते 'नासि त्वं देहेन्द्रियमनःप्राणाहंकारसंघातस्तेषां घटादिवद्दृश्यत्वात् । नासि संसारी । त्वयि प्रतीयमानस्य सुखदुःखादेरन्तःकरणोपाधिनिबन्धनत्वात् । किं तर्हि स्वरूपं यत्सर्ववेदान्तप्रतिपाद्यमद्वयसदानन्दप्रत्यग्बोधरूपं वस्तु तदेव त्वमिति' । एवं परमकारुणिकेन गुरुणा यदा प्रतिबोध्यते तदैवोत्तमाधिकारिणः शिष्यस्य शरीरगता विपरीतमतिरनात्मन्यात्मत्वमतिर्विनिवर्तते । तस्माद्वाक्यजनितज्ञानेनाज्ञानतत्कार्यनिवृत्तौ निरतिशयानन्दाविर्भावलक्षणस्य प्रयोजनस्य विद्यमानत्वाद्वस्तुपरत्वे वाक्यस्य पुरुषार्थपर्यवसायित्वमस्त्येवेत्यर्थः ॥९२॥

यदि नापनयेच्छ्रुतिरात्ममतिं पुरुषस्य शरीरगतामनृताम् ।
तदहंमतिहेतुककर्मगतिं सुखदुःखफलामवशोऽनुभवेत् ॥ ९३ ॥

यदि तत्त्वमसिवाक्यमज्ञाननिवर्तकं न भवेत्तर्हि जननमरणादिलक्षणः संसारो दुर्निवार्यः स्यादिति विपक्षे दोषमाह—यदीति । पुरुषस्य शरीरगतामनृतामात्ममतिं नापनयेद्यदनात्मबुद्धिं न निवर्तयेद्यदि तर्हि सुखदुःखफलामहंमतिहेतुकस्य कर्मणो

गतिं तिर्यगादिप्राप्तिरूपामवशोऽनुभवेत् । तस्माद्वाक्यजनितज्ञानेन निवृत्तायामविद्यायां तत्कार्यस्य संसारस्यापि निवृत्तिसिद्धेर्वाक्यस्याखण्डैकरसवस्तुपरत्वे निरवद्यपुरुषार्थसाधनत्वं संभवतीति ॥ ९३ ॥

**यदि तत्त्वमसीति वदेद्वचनं सदुपासनकर्म न तत्त्वमतिम्।**
**पुरुषस्य फलं सदुपासनतो विमृशामि भविष्यति कीदृगिति ॥ ९४ ॥**

एवं वाक्यस्य वस्तुपरत्वे निरवद्यफलत्वमुपपाद्य विधिपरत्व एव वाक्यस्य फलाभाव इति दर्शयति—यदीति । तत्त्वमसीति वचनं सदुपास्वेति सदुपासनलक्षणं कर्म वदेद्यदि, यदि च न तत्त्वमतिं जीवपरयोरेकत्वं बोधयेत्तर्हि ब्रह्मोपासकस्य पुरुषस्य सदुपासनतः कीदृक् फलं भविष्यतीति विमृशामि । उपासनपरत्वे न किंचिदपि फलं भविष्यतीत्यर्थः ॥ ९४ ॥

**पुरुषस्य तु मर्त्यगुणस्य भवेत्सदुपासनया न सदात्मकता ।**
**न कथंचिदपि प्रजहाति यतः प्रकृतिं सहजामिह कश्चिदपि ॥ ९५ ॥**

ननु किमत्र विमर्शनेन जीवस्यात्यन्तभिन्नस्यापि ब्रह्मणैकत्वापत्तिरेव फलं भविष्यतीत्याशङ्क्याऽऽह—पुरुषस्येति । मर्त्यगुणस्य परमार्थतो मर्त्यधर्मयुक्तस्यापि पुरुषस्य सदुपासनया सदात्मकता सद्रूपब्रह्मप्राप्तिर्न भवेत् । तत्र हेतुमाह—न कथंचिदपीति । इह कश्चिदपि सहजां निजासिद्धां प्रकृतिं स्वभावं न जहाति न परित्यजति । इति यतोऽतः कारणात्सदुपासनया सद्रूपप्राप्तिर्न भवेदित्यर्थः ॥ ९५ ॥

**यदि देहभृदेष सदात्मकतां प्रगमिष्यति वै सदुपासनया ।**
**न जिहासति रूपमसौ न निजं यत ऐक्यगतिर्न भवत्युभयोः ॥९६॥**

एष देहभृज्जीवः सदुपासनया सदात्मकतां प्रगमिष्यति यदि तर्ह्यसौ जीवो निजं मर्त्यस्वभावं न जिहासतीति न किंतु जिहासत्येव । तत्र हेतुः—यत इति । उभयोरत्यन्तविलक्षणयोर्विरुद्धस्वभावत्वादैक्यगतिर्न भवति । एकत्वलक्षणफलाङ्गीकारे मर्त्यलक्षणायाः प्रकृतेः परित्यागासंभवात् । तत्परित्यागे च स्वरूपस्य नाशप्रसङ्गात् । मर्त्यस्वभावापरित्यागे चान्यस्यान्यात्मकत्वायोगात्, सर्वथाऽप्युपासनाफलं ब्रह्मप्राप्तिर्न भवेदित्यर्थः । तदुक्तं श्रीमच्छंकराचार्यैः—'नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिन्तयेत् । अन्यस्यान्यात्मभावे हि नाशस्तस्य ध्रुवो भवेत्' ॥ इति ॥ ९६ ॥

**रसविद्धमयः प्रकृतिं सहजां प्रविहाय यथा कनकत्वमियात् ।**
**पुरुषोऽपि तथा सदुपासनया प्रतिपत्स्यत एव सदात्मकताम् ॥९७॥**

ननु स्वरूपनाशेन विनाऽपि लोके रसविद्धस्यायसः कनकत्वप्राप्तिर्दृष्टा । तद्वद-त्रापि मर्त्यत्वभावविनाशेऽपि जीवस्वरूपविनाशमन्तरेण ब्रह्मत्वापत्तिः फलं भवत्विति चोदयति पूर्ववादी—रसेत्यादि । रसविद्धमयो लोहं स्वनाशमन्तरेण सहजां प्रकृतिमयस्त्वं प्रविहाय यथा कनकत्वमियात्प्राप्नुयात्तथा पुरुषोऽपि सदुपासनया 'अहं ब्रह्मास्मि' इति संततोपासनया स्वनाशमन्तरेण सहजं मर्त्यत्वं प्रविहाय सदात्मकतां ब्रह्मात्मकतां प्रतिपत्स्यत एवेति यस्मात्तस्माद्वाक्यजनितसम्यग्ज्ञानमन्तरेण सदुपासनकर्मणैव जीवस्य ब्रह्मत्वप्राप्तिः संभवतीति चोद्यवादिनोऽभिप्रायः ॥ ९७ ॥

अयसोऽवयवानभिभूय रसः स्थितवाननलानुगृहीतिमनु ।
कनकत्वमतिं जनयत्ययसि प्रतिपन्नमयो न तु काञ्चनताम् ॥ ९८ ॥

एष दृष्टान्तो विद्वत्संप्रतिपन्नो न भवति । अयसः कनकत्वस्य भ्रान्तित्वादिति परिह-रति सिद्धान्ती—अयस इति । अयसोऽवयवानभिभूयाऽऽच्छाद्य स्थितवान्रसः पारदोऽनलानुगृहीतिमन्वग्नौ प्रक्षेपणानन्तरं तदनुग्रहबलादयसि लोहे केवलां कनकमतिं जनयति । भ्रान्तानां तत्र कनकबुद्धिमुत्पादयति । अयस्तु पुनः काञ्चनतां न प्रति-पन्नं न प्राप्तमित्यर्थः ॥ ९८ ॥

उदकावयवानभिभूय पयो रजतावयवांश्च यथा कनकम् ।
विपरीतमतिं जनयत्युदके रजते च तथाऽयसि हेममतिम् ॥ ९९ ॥

एतमेवार्थं दृष्टान्तेन स्पष्टयति—उदकेति । यथा पयो दुग्धमुदकावयवानभिभू-याऽऽच्छाद्य, उदके विपरीतमतिं क्षीरमतिं जनयति, यथा कनकमपि रजतावयवानभिभूय रजते कनकत्वमतिं जनयति । तथा रसोऽप्ययसोऽवयवानभिभूयायसि हेमबुद्धिं जनयति । हेममतिमेव केवलां जनयति न तु हेम करोति । तस्मादयसः काञ्चनत्वं भ्रान्तिगृहीतमित्यर्थः ॥ ९९ ॥

रसवीर्यविपाकविनाशमनु प्रविनश्यति काञ्चनताऽप्ययसः ।
कृतकं हि न नित्यमतिप्रगतं समवेतमवश्यमपैति यतः ॥ १०० ॥

इतश्चायसः काञ्चनत्वं भ्रान्तिमात्रं रसवीर्यविपाकनाशे काञ्चनप्रतीत्यभावा-त्सद्भावस्यागन्तुकस्यावश्यं वस्त्रादिवदनित्यतानुमानादित्याह—रसेति । अयसः काञ्चनताऽपि रसवीर्यविपाकविनाशमनु रसस्य पारदस्य यद्वीर्यं तस्य यो विपाकः परिणामस्तद्विनाशमनु प्रविनश्यति रसवीर्यविपाकस्य नाशे काञ्चनत्वप्रतीतिरपि विनश्यति । तत्र हेतुं कथयति—समवेतमिति । समवेतं कार्यमवश्यमपैति विन-श्यति यतः । तत्र व्याप्तिं दर्शयति—कृतकं हीति । कृतकं कार्यं वस्तु नित्यं

न भवतीति वस्त्रादौ प्रगतं प्रसिद्धमिति । तस्मादध्यसः काञ्चनत्वं भ्रान्तिसिद्धमित्यर्थः ॥ १०० ॥

**अमृतत्वमसत्पुरुषस्य यदि क्रियते सदुपासनया यजिवत् ।**
**यजिकार्यवदन्तवदेव भवेत्कृतकस्य यतो विदिताऽध्रुवता ॥ १०१ ॥**

एवमन्यस्यान्यात्मकत्वस्य भ्रान्तिमात्रत्वात्परमार्थतोऽन्यस्यान्यात्मकत्वासंभवान्मर्त्यस्वभावस्य सदुपासनकर्मणाऽमृतत्वलक्षणब्रह्मप्राप्तिर्न संभवतीत्युक्तम् । तत्रेदमाशङ्कते—अमृतत्वं नाम प्रागविद्यमानमेवोपासनाकर्मणा साध्यं भविष्यति यागादिसाध्यस्वर्गादिफलवदिति । अत्राऽऽह सिद्धान्ती—अमृतत्वमिति । यजिवद्यागादिवत्पूर्वमसदेवामृतत्वं पुरुषस्य सदुपासनया क्रियते संपाद्यते यदि तर्हि यजिकार्यवत्स्वर्गादिवदन्तवदेव भवेत् । तत्र हेतुमाह—कृतकस्येति । कृतकस्य कार्यस्याध्रुवताऽनित्यता विदिता विज्ञाता ' तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते ' ' स्वभावत्वविशिष्टकृतकत्ववत्तदनित्यं यथा घटादिः ' इति श्रुत्यनुमानाभ्यां सिद्धं कृतकस्यानित्यत्वम् । तस्मादमृतत्वस्य क्रियया साध्यत्वे तस्य विनाशित्वमवश्यं भवेदित्यर्थः ॥ १०१ ॥

**पुरुषस्य सतश्च विधर्मकयोः सदुपासनया न भवेत्समितिः ॥**
**यदि संगतिरिष्यत एव तयोरविमुक्ततया न चिरं वसतः ॥१०२॥**

ननु यागसाध्यस्वर्गादिवन्मा भूदुपासनाफलं, जीवब्रह्मणोः संयोगाख्यं तु फलं भविष्यतीत्याशङ्क्याऽऽह--पुरुषस्येति । विधर्मकयोः संसारित्वासंसारित्वादिविरुद्धधर्मवतोः पुरुषस्य सतश्चेत्युभयोः सदुपासनया ब्रह्मोपासनकर्मणा समितिः संगतिर्न भवेत् । विपक्षे दोषमाह—यदीति । तयोः संगतिरिष्यते यदि तर्ह्यविमुक्ततया संयुक्ततया चिरं न वसतः । ' संयोगा विप्रयोगान्ताः ' इति न्यायात् । उपासनापरत्वपक्षे विनाशरहितं फलं नास्तीत्यर्थः ॥ १०२ ॥

**फलमीदृगिदं सदुपासनतः पुरुषस्य भविष्यति नान्यदतः ।**
**न च तन्निरवद्यतयाऽभिमतं विदुषां बहुदोषसमीक्षणतः ॥ १०३ ॥**

मोक्षस्य चतुर्विधक्रियाफलविलक्षणत्वादुपासनाख्यं कर्म मोक्षसाधनं न भवेदित्याह—फलमीदृगिति । सदुपासनतो ब्रह्मोपासनतो ब्रह्मोपासनकर्मणा पुरुषस्योपासकस्येदृगेतादृशमेव फलं भविष्यत्यतोऽन्यन्नित्यं फलं कर्मणा न लभ्यते । यद्यन्यत्फलं कल्प्येत तदपि फलं निरवद्यतया निर्दुष्टतया विदुषां नाभिमतम् । कुतो

नाभिमतमित्यत्राऽऽह—बहुदोषेति । साधनसाध्यस्य सर्वस्यानित्यत्वजडत्वादिदोषदर्शनादित्यर्थः ॥ १०३ ॥

**सदुपासनकर्मविधानपरं न भवेदत एव हि तद्वचनम् ।**
**अहमस्मि शरीरमिदं च ममेत्यविवेकमतिं विनिवर्तयति ॥ १०४ ॥**

एवं तावत्तत्त्वमसिवाक्यस्योपासनाविधिपरत्वे समीचीनफलाभावादुपासनापरत्वमयुक्तमित्युक्तम् । इदानीं किं तर्हि युक्तमित्यपेक्षायां यथावस्थितवस्तुबोधकतयाऽज्ञाननिवृत्तिद्वारेण मोक्षसाधनत्वमेवेत्याह सिद्धान्ती—सदुपासनेति । अत एवोपासनापरत्वे निरवद्यफलाभावादेव तद्वचनं तत्त्वमसिवाक्यं सदुपासनकर्मविधानपरं न भवेत् । तर्हि तद्वाक्यं किंपरमित्यत्राऽऽह—अहमस्मीति । इदं शरीरमहमस्मि मनुष्योऽहं ब्राह्मणोऽहं क्षत्रियोऽहं व्रती गृही संन्यासीति शरीरादिष्वहंबुद्धिमिदं शरीरं मदीयमिति शरीरगतामात्मीयां बुद्धिं च निवर्तयति । आत्मानात्मविवेकेनाऽऽत्मज्ञानमुत्पादयतीत्यर्थः । ॥ १०४ ॥

**सकलोपनिषत्सु शरीरभृतः परमात्मपदैकविभक्तितया ।**
**उपदेशवचांस्यनयैव दिशा गमयेन्मतिमानभियुक्ततया ॥ १०५ ॥**

एवं तत्त्वमसिवाक्यस्याखण्डैकरसवस्तुपरत्वमुपपादितम् । इदानीं सर्वशाखोपनिषद्गतानि महावाक्यान्यप्यनयैव दिशा योजयितव्यानीत्याह—सकलेति । शरीरभृतो जीववाचकपदस्य परमात्मपदैकविभक्तितया परमात्मवाचकपदेनैकविभक्तितया सामानाधिकरण्येन सकलोपनिषत्सु विद्यमानानि यान्युपदेशवचांस्येकत्वप्रतिपादकानि वाक्यानि तान्यपि मतिमानुपनिषदां शक्तितात्पर्यज्ञोऽनयैव दिशोक्तेन मार्गेण यथा तत्त्वमसिवाक्यस्य गुणवाद-स्तुति-विपरीतबोधकत्वोपासनापरत्वनिरासेन जीवपरयोरेकत्वप्रतिपादकत्वमुपपादितं तथाऽभियुक्ततया प्रामाण्येन गमयेद्बुध्येदित्यर्थः॥ १०५॥

**द्रविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेव निरूपितवान् ।**
**शबरेण विवर्धितराजशिशोर्निजजन्मविदुक्तिनिदर्शनतः ॥ १०६ ॥**

संप्रदायवचनमप्यत्र प्रमाणमित्याह—द्राविडोऽपीति । द्रविडाचार्यश्चोपदेशसाहस्र्यां 'श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ' इत्यादिना तत्त्वमसीतिवचस्तत्त्वमसीति वाक्यमज्ञानस्य निवर्तकमित्येव निरूपितवान् । तत्र दृष्टान्तं दर्शयति—शबरेणेति । कुतश्चित्कारणादरण्यं प्राप्तस्य शबरेण विवर्धितस्य राजशिशो राजपुत्रस्य निजं जन्म वेत्तीति निजजन्मविद्यः शबरस्तस्योक्तिर्यथा राजपुत्रस्य राजपुत्रत्वाज्ञाननिवर्तिका तन्निदर्शनतस्तद्दृष्टान्तेन तत्त्वमसिवाक्यस्याज्ञाननिवर्तकत्वं निरूपितवानित्यर्थः ॥१०६॥

यत एवमतः स्वशरीरगतामहमित्यविवेकमतिं सुदृढाम् ।
प्रविहाय यदक्षरमद्वयकं त्वमवेहि तदक्षरमात्मतया ॥ १०७ ॥

यस्मात्तत्त्वमसिवाक्यमज्ञाननिवर्तकं तस्मात्त्वं देहादिष्वहंबुद्धिं ममत्वाभिमानं च परित्यज्याखण्डैकरसवाक्यार्थज्ञानानुकूलतया वर्तस्वेति शिष्यं शिक्षयति गुरुः—यत एवमिति । यत एवं वाक्यमज्ञाननिवर्तकमतः कारणात्स्वशरीरगतां सुदृढामनादिसिद्धामहं ममेत्यविवेकमतिं प्रविहाय ततः परमद्वयं सजातीयविजातीयनानात्वरहितं न क्षरतीत्यक्षरं यद् ब्रह्म तदात्मतयाऽवेहि स्वरूपत्वेन जानीहीत्यर्थः ॥ १०७ ॥

न मनो न मतिः करणानि च नो न रजो न तमो न च सत्त्वमपि ।
न मही न जलं न च वह्निरपि श्वसनो न नभश्च पदं परमम् ॥१०८॥
अमनस्कमबुद्धिमनिन्द्रियकमरजस्कमसत्त्वतमस्कमपि ।
अमहीजलवह्न्यनिलाम्बरकं परमक्षरमात्मतयाऽऽश्रय भोः ॥ १०९ ॥

त्वमवेहि तदक्षरमात्मतयेति प्रत्यग्ब्रह्मणोरेकत्वमुक्तं तत्सिद्ध्यर्थं तत्त्वंपदार्थपरिशोधनं करोति—न मन इत्यादिना श्लोकषट्केन । तत्र न मनो न मतिरित्यादिश्लोकद्वयेन तत्पदार्थपरिशोधनं क्रियते । तत्राऽऽद्यश्लोकेन तत्पदलक्ष्यस्य ब्रह्मणो मनआदिवैलक्षण्यं साधयति । द्वितीयश्लोकेन च मनआदिना संबन्धराहित्यं दर्शयति । न मनो न मतिरित्यादिश्लोकद्वयस्यायं भावः—मनआदिकमात्मा न भवति । दृश्यत्वात्कारणत्वात्कार्यत्वाद्विभक्तत्वाज्जडत्वात्परिच्छिन्नत्वादाद्यन्तवत्त्वाच्च । एवं मनआदेरनात्मत्वे सिद्धे तत्साक्षिण आत्मनो निरवयवत्वादसङ्गस्वभावत्वादहंकारममकारादिरहितत्वाच्च नित्यत्वं शुद्धत्वं बुद्धत्वं मुक्तत्वमविलुप्तदृक्स्वरूपत्वं च सिद्धम् । यदेवं भूतमक्षरं परं तदात्मतयाऽऽश्रयेत्युपदेशप्रकारः ॥ १०८ ॥ १०९ ॥

करणानि हि यद्विषयाभिमुखं प्रगमय्य मतिर्विषयेषु चरेत् ।
तदु जागरितं प्रवदन्ति बुधा न तदस्ति ममेत्यवगच्छ दृशेः ॥ ११० ॥

इदानीं त्वंपदार्थशोधनाय जागरितावस्थां दर्शयति—करणानीति । मतिः करणानीन्द्रियाणि विषयाभिमुखं यथा भवति तथा प्रगमय्य प्रापयित्वा (प्रापय्य?) विषयेषु चरेदिति बुधा यज्जागरितं प्रवदन्ति, दृशेर्दृग्रूपस्य स्वयंप्रभस्य मम तज्जागरितं नास्तीत्यवगच्छ जानीहीत्यर्थः ॥ ११० ॥

करणानि यदोपरतानि तदा विषयानुभवाहितवासनया ।
विषयेण विना विषयप्रतिमं स्फुरणं स्वपनं प्रवदन्ति बुधाः ॥१११॥

इदानीं स्वप्नावस्थां दर्शयति—करणानि यदेति । जाग्रत्स्थितिनिमित्तकर्मक्षये यदा करणानीन्द्रियाण्युपरतानि बाह्यविषयेभ्यो निवृत्तानि तदा बाह्यविषयेण विना केवलं विषयानुभवाहितवासनया विषयानुभवजनितसंस्कारमात्रेण विषयप्रतिमं स्वप्नं बुधाः प्रवदन्ति । उपसंहृतकरणस्य जाग्रद्वासनानिमित्तं तथाविधहस्त्यश्वरथादिविषयं ज्ञानं स्वप्न इत्यर्थः ॥ १११ ॥

**करणस्य धियः स्फुरणेन विना विषयाकृतिकेन तु या स्थितता ।**
**प्रवदन्ति सुषुप्तिममूं हि बुधा विनिवृत्ततृषः श्रुतितत्त्वविदः ॥ ११२ ॥**

इदानीं सुषुप्त्यवस्थां दर्शयति—करणस्येति । करणस्य धियोऽन्तःकरणरूपाया बुद्धेर्विषयाकृतिकेन विषयाकारेण स्फुरणेन विना या स्थितिस्तामम्ूं निर्विषयां स्थितिं सुषुप्तिं बुधाः प्रवदन्ति । कीदृशा बुधाः । विनिवृत्ततृषः । विनिवृत्ताऽऽरोपितस्य निषेध्यत्वेन दृष्टानुश्रविकविषयेभ्यो निवृत्ता तृट् तृष्णा येषां तादृशाः । एषणात्रयरहिताः परमहंसाः । किंच श्रुतितत्त्वविदः ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ इत्यादिषु प्रतिपादितं यत्तत्त्वं तद्विदन्तीति तादृशा ब्रह्मज्ञानिनो बुद्धेः स्वकारणोपरमं(मां) सुषुप्तिं प्रवदन्तीत्यर्थः ॥ ११२ ॥

**इति जागरितं स्वपनं च धियः क्रमतोऽक्रमतश्च सुषुप्तमपि ।**
**न कदाचिदपि त्रयमस्ति ममेत्यवगच्छ तदाऽस्मि तुरीयमिति ॥ ११३॥**

एवमवस्थात्रयं दर्शयित्वेदानीं तत्साक्षिणश्चिदात्मनोऽवस्थात्रयराहित्यं दर्शयति—इति जागरितमिति । इत्थं क्रमतोऽक्रमतश्च वर्तमानं जागरितं स्वपनं स्वप्नः सुषुप्तमित्येतदवस्थात्रयं धिय एव धीधर्म एव । तत्साक्षिणश्चिदात्मनो मम कदाचिदपीदमवस्थात्रयं नास्तीत्यवगच्छ । किंच सदा देहेन्द्रियमनसां प्रसादे प्रशान्तावपि स्वप्रकाशपरमानन्दचिद्धनमवस्थात्रयातीतं यत्तुरीयं पदं तदेवाहमस्मीत्यवगच्छ । तदुक्तमाचार्यैः—

सुषुप्तजाग्रत्स्वपतश्च दर्शनं न मेऽस्ति किंचित्स्वमिवेह मोहनम् ।
स्वतश्च तेषां परतोऽप्यसत्त्वतस्तुरीय एवास्मि सदा दृगव्ययः ॥ इति ।

एवं जानीहीत्यर्थः ॥ ११३ ॥

**यदु जागरितप्रभृतित्रितयं परिकल्पितमात्मनि मूढधिया ।**
**अभिधानमिदं तदपेक्ष्य भवेत्परमात्मपदस्य तुरीयमिति ॥ ११४ ॥**

यद्येवं तर्हि तस्याऽऽत्मनस्तुरीयत्वं परमार्थतोऽङ्गीकृतं स्यात् । ततश्चाऽऽत्मनो निर्विशेषत्वं कथं स्यादित्याशङ्क्याऽवस्थात्रयमपेक्ष्य तुरीयत्वमिति जाग्रदादेरसत्त्वकथना-

थाऽऽह—यद्वु जागरितेत्यादि । मूढधियाऽविवेकिना प्रत्यगात्मनि यज्जागरितप्रभृतित्रयं परिकल्पितं तदवस्थात्रयमपेक्ष्य परमात्मपदस्य तुरीयमित्यभिधानं भवेत् । यस्मात्तुरीयत्वं साकाङ्क्षं तस्मात्तुरीयशब्दवाच्यमवस्थान्तरं वस्तुतो नास्ति किंत्वग्रहणान्यथाग्रहणरहितं स्वयंप्रकाशपरमानन्दचिद्घनं परमात्मतत्त्वं तुरीयशब्देन विवक्ष्यते न तु तुरीयमित्यवस्थान्तरं ततश्चाऽऽत्मा निर्विशेषः सिध्यतीत्यभिप्रायः ॥ ११४ ॥

यदपेक्ष्य भवेदभिधानमिदं परमात्मपदस्य तुरीयमिति ।
तदसत्यमसत्यगुणश्च ततः परिनिर्मितवारणचेष्टितवत् ॥ ११५ ॥

नन्ववस्थात्रयापेक्षं तुरीयत्वं भवतु तथाऽपि तत्सत्यं भविष्यतीत्याशङ्क्यावस्थात्रयस्य मायामयत्वात्तदपेक्षितं तुरीयत्वमपि तथाविधमेवेत्यभिप्रेत्याऽऽह—यदपेक्ष्येति । यदवस्थात्रयमपेक्ष्य परमात्मपदस्य परमात्मवस्तुनस्तुरीयमितीदमभिधानं भवेत्तदवस्थात्रयमसत्यम् । अवस्थात्रयस्यासत्त्वे हेतुमाह—तदसत्यमिति । असत्यस्य मनसो गुणो धर्म इति यस्मात्तस्मात्तदवस्थात्रयमसत्यम् । असत्यधर्मस्यासत्त्वे दृष्टान्तमाह—परिनिर्मितेति । मत्तगजाकीर्णे वनप्रदेशे संचरतां गजभीरूणां केनचिद्गजपरिमितपाषाणे समारोपितस्य वारणस्य चेष्टितं करचरणादिमत्त्वं तच्चेष्टितं च यद्वदसत्यं तद्वन्मायामयस्य मनसो गुणत्वादवस्थात्रयमप्यसत्यं, तथा सति तदपेक्षितं तुरीयत्वमपि परमात्मव्यतिरेकेण वस्तुतो नास्तीत्यर्थः ॥ ११५ ॥

गगनप्रमुखं पृथिवीचरमं विषयेन्द्रियबुद्धिमनःसहितम् ।
जनिमज्जगदेतदभूतमिति श्रुतयः प्रवदन्त्युपमानशतैः ॥ ११६ ॥

असत्यमनोधर्मत्वाज्जागरितादित्रयमसत्यमित्युक्तम् । इदानीं तत्साधनाय मनआदिजगतोऽसत्यत्वं साधयति—गगनप्रमुखमिति । गगनप्रमुखं पृथिवीचरममाकाशमारभ्य पृथिव्यन्तं विषयेन्द्रियबुद्धिमनःसहितमेतत्सर्वं जगदभूतमसत्यमिति श्रुतय उपमानशतैः प्रवदन्ति । मनआदिजगतो दृष्टान्तशतेन जनिमत्त्वान्मिथ्यात्वं कथयन्ति श्रुतय इत्यर्थः ॥ ११६ ॥

कफपित्तसमीरणधातुधृतं कुशरीरमिदं सततं हि यथा ।
भवप्रभृति प्रलयान्तमिदं जगदग्निरवीन्दुधृतं हि तथा ॥ ११७ ॥

तत्र दृष्टान्तं दर्शयितुमुपोद्घातं करोति—कफपित्तेति । "प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घातः" इति लक्षणज्ञैरुपदिष्टामुपोद्घातप्रक्रियामाश्रित्य मनआदेरनृतत्वं साध्यते—इदं शरीरं कुत्सितं कुशरीरमिति । यथा सततं कफपित्तसमीरणधातुधृतं वातपित्तश्लेष्माद्व्यस्य धातोर्वैषम्ये सति शरीरस्य नाश-

दर्शनात्त्रिधातुवैषम्याभावे च स्वास्थ्यदर्शनाच्च शरीरं कफपित्तसमीरणधातुधृतमित्युच्यते । यथाऽयं दृष्टान्तस्तथा प्रभवप्रभृति प्रलयान्तमिदं जगदग्निरवीन्दुभिर्धृतमग्न्यादीनां ज्योतिषामन्यतमस्याप्यभावे जगदन्धतमसं भवेत् । ततश्च जगतः स्थितिरपि न स्यादित्यभिप्रायेण जगदग्निरवीन्दुधृतमित्युच्यत इति भावः ॥ ११७ ॥

**जगतः स्थितिकारणमित्थमिदं प्रथितं रविवह्निशशित्रितयम् ।**
**स्मृतिवेदजनेषु भृशं यदिति श्रुतिरीरितवत्यनृतं तदिति ॥ ११८ ॥**

कुशरीरधारकधातुत्रितयवज्जगद्धारकस्याग्न्यादित्रितयस्यासत्यत्वं श्रुतिर्दृष्टान्तेनोक्तवतीत्याह—जगत इति । इत्थमुक्तेन प्रकारेणेदं रविवह्निशशित्रितयं जगतः स्थितिकारणमिति स्मृतिवेदजनेषु प्रसिद्धं प्रथितमिति "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "अहं वैश्वानरो भूत्वा" इत्यादिना "पचाम्यन्नं चतुर्विधम्" इत्यन्तेन, "यदादित्यगतं तेजः" इत्यारभ्य "तत्तेजो विद्धि मामकम्" इत्यन्तं, "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।" इति वेदस्मृतिविद्वज्जनेषु जगतः स्थितिहेतुतया प्रथितं यदग्न्यादित्रितयं तदग्न्यादिकमनृतमिति श्रुतिरीरितवती। उक्तवतीत्यर्थः ॥ ११८ ॥

**यदु रोहितशुक्लसुकृष्णमिदं ज्वलनादिषु रूपमवैति जनः ।**
**तदु तैजसमाप्यमथान्नमिति ब्रुवती त्रयमेव तु सत्यमिति ॥ ११९ ॥**
**रुचकप्रमुखं कनकादिमयं रुचकाद्यभिधाननिमित्तमिति ।**
**असदित्यवगम्यत एव यतो व्यभिचारवती रुचकादिमतिः ॥ १२० ॥**
**न कदाचिदपि व्यभिचारवती कनकादिमतिः पुरुषस्य यतः ।**
**तत एव हि सत्यतयाऽभिमतं कनकादि विपर्यय एषु नहि ॥ १२१ ॥**
**रुचकादिसमं ज्वलनादि भवेदनृतत्वगुणेन तु सत्यतया ।**
**अरुणप्रमुखं ज्वलनप्रभृतिप्रकृतित्रितयं कनकादिसमम् ॥ १२२ ॥**
**अनयोपमयाऽनृततामवदच्छ्रुतिरग्निदिवाकरचन्द्रमसाम् ।**
**अमृषात्वमपि श्रुतिरुक्तवती त्रितयस्य तु रक्तपुरःसरिणः ॥ १२३ ॥**

कथमग्न्यादित्रितयस्यानृतत्वं श्रुतिरुक्तवतीत्याकाङ्क्षायामाह—यदु रोहितमित्यादिभिः पञ्चभिः श्लोकैः । "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव

सत्यम् " इति च्छान्दोग्यश्रुतिः । ज्वलनादिष्वनुगतं यद्रोहितशुक्लसुकृष्णमिदं रूपं जनो वेत्ति जानाति तेषां रूपाणां मध्ये यद्रोहितं रूपं तत्तैजसं तेजःसंभवं तत्तेजसः कारणं रोहितमित्यर्थः । तेषां मध्ये यच्छुक्लं तदाप्यमप्संबन्धि तदभेदेनामृतकिरणश्चन्द्रमा लक्ष्यते । तस्मादयमर्थस्तेषां मध्ये यच्छुक्लं रूपं तदाप्यं चान्द्रमसं चन्द्रमसः कारणमिति । तेषां मध्ये यत्कृष्णं रूपं भास्वरं कृष्णवर्णं तदन्नसंबन्धि । अन्नशब्देनान्नहेतुर्दिवाकरो लक्ष्यते तस्मादयमर्थः । तेषां मध्ये यत्कृष्णं भास्वरं कृष्णं तदेवान्नशब्देन लक्षितो दिवाकरस्तस्य कारणं सुकृष्णमिति यावत् । ' आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । ' इति श्रुत्या दिवाकरस्य कृष्णरूपत्वमवगम्यते । एवं ज्वलनहिमकरदिवाकराणां रोहितशुक्लकृष्णकार्यत्वं ब्रुवती श्रुतिस्त्रयमेव सत्यमित्युक्तवती । कारणभूतमरुणादित्रयमेव नित्यं तत्कार्यमग्न्यादित्रयमसत्यमिति सिद्धे तद्दृष्टान्तेन कार्यस्य मनआदिजगतो मिथ्यात्वं कारणस्य ब्रह्मणः सत्यत्वं च साधयितुं वाक्यमित्यभिप्रायः । एवं कारणस्यारुणादेः सत्यत्वं कार्यस्य चाग्न्यादेरसत्यत्वं श्रुत्योक्तं तत्र को दृष्टान्त इत्याकाङ्क्षायां तं दृष्टान्तं दर्शयितुं कनकादेः सत्यत्वं रुचकादेरसत्यत्वं दर्शयति--रुचकप्रमुखमिति । कनकादिमयं कनककार्यं रुचकप्रमुखं रुचकाद्यभिधाननिमित्तं यद्यपि तथाऽप्यसदित्येवावगम्यते, रुचकादिकमसत्यमिति ज्ञायते । कुत एतदिति तत्राऽऽह—यत इति । रुचकादिर्व्यभिचरतीति यतः, अतः कारणादसदित्यवगम्यत इत्यर्थः । कार्यस्य रुचकादेरसत्यत्वमुक्त्वाऽधुना कारणस्य कनकादेः सत्यत्वं साधयति—न कदाचिदपीति । द्रष्टुः पुरुषस्य कनकादिमतिः कदाचिदपि न व्यभिचरतीति यतः कनकमिति मतिः कनककार्ये रुचकादौ सर्वत्राप्यनुस्यूतेति यस्मात्तस्मात्कनकादि सत्यतयाऽभिमतम् । उक्तं हेतुं निगमयति—विपर्यय एषु नहीति । एषु कनकादिरुचकादिषु विपर्ययो नहि व्यत्यासो नास्ति । यस्मात्तस्मात्कनकादि सत्यं रुचकादि चासत्यमित्यर्थः । तर्हि दृष्टान्तदार्ष्टान्तिकयोर्मध्ये कस्य केन सह साम्यमित्यपेक्षायामाह—रुचकादीति । ज्वलनाद्यग्न्यादित्रितयं रुचकादिसमं भवेत् । तत्र हेतुं कथयति—अनृतत्वगुणेनेति । अनृतत्वगुणवत्त्वादित्यर्थः । ज्वलनप्रभृतिप्रकृतित्रितयं ज्वलनप्रभृतेः कारणत्रितयमरुणप्रमुखं सत्यत्वादेव कनकादिसमम् । अनेन कनकरुचकादिदृष्टान्तेन कारणस्यारुणादेः सत्यत्वं कार्यस्याग्न्यादेरसत्यत्वमुक्तवती श्रुतिरित्याह—अनयेति । " यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इत्यादिनाऽखिलस्य कार्यस्य कारणमात्रत्वं वदति श्रुतिः । अनयोपमया कनकरुच-

कादिदृष्टान्तेन, अग्निदिवाकरचन्द्रमसामनृततामवदत् । किंच रक्तपुरःसरिणस्त्रित-यस्यामृषात्वमपि सत्यत्वमप्युक्तवतीत्यर्थः ॥ १२३ ॥

**अनृतत्वमिदं ज्वलनप्रभृतेर्यदवादि भवेत्तदुदाहरणम् ।**
**वितथा विकृतिः सततं सकला न तथा प्रकृतिः श्रुतिनिश्चयतः॥१२४॥**

उपमानशतैर्मनआदिजगतोऽनृतत्वं श्रुतिरुक्तवतीति पूर्वमुक्तम् । इदानीं तदुपमा-नशतं विविच्य दर्शयति—अनृतत्वमिति । रुचकादिदृष्टान्तेन ज्वलनप्रभृतेर्यदनृत-त्वमवादि तदिदमुदाहरणं भवेत् । तत्कथमित्यत्राऽऽह—वितथेति । सततं सकला विकृतिर्वितथा सर्वविकारजातमसत्यं प्रकृतिस्तु न तथा कारणं तु तथाविधं न भवे-त्किंतु सत्यमेवेति निश्चयेनोक्तमित्यर्थः ॥ १२४ ॥

**प्रदिदर्शयिषुर्वसनस्य यथा वितथत्वमपास्यति तन्तुगुणम् ।**
**अपकृष्य तु तन्तुसमं त्रितयं ज्वलनप्रमुखस्य तथोक्तवती ॥ १२५ ॥**

कारणद्रव्यापकर्षणं कार्यद्रव्यस्यानृतत्वसाधकमित्येतल्लोकेऽपि दृष्टमित्याह—प्रदि-दर्शयिषुरिति । वसनस्य वस्त्रस्य वितथत्वं प्रदिदर्शयिषुः पुरुषस्तन्तुगुणमपास्यति । तन्तुकार्यं पटं यथाऽपास्यति निरस्यति 'इदं वस्त्रं तन्तुमात्रम्' इति व्यक्तनार्थं, तथाऽत्रापि तन्तुसमं त्रितयं कारणभूतमरुणादित्रितयमपकृष्य पृथक्कृत्य ज्वलनप्रमु-खस्याग्न्यादित्रिकस्य मिथ्यात्वमुक्तवतीत्यर्थः ॥ १२५ ॥

**अवनिप्रमुखं वियदन्तमिदं विकृतिस्तु परस्य भवत्यपरम् ।**
**अनृतं त्वपरं विकृतिस्तु यतोऽवितथं तु परं प्रकृतिस्तु यतः ॥१२६॥**

एवमग्न्यादिदृष्टान्तेन मनआदिजगतो मिथ्यात्वमरुणादिदृष्टान्तेन ब्रह्मणः सत्यत्वं च श्रुत्या विवक्षितमित्युक्तम् । इदानीं तत्र हेत्वाकाङ्क्षायां कार्यत्वात्कारणत्वाच्चे-त्युभयत्र हेतुमाह—अवनिप्रमुखमिति । अवनिप्रमुखं वियदन्तमिदमपरमर्वाचीनं परस्य ब्रह्मणो विकृतिः कार्यं भवति । किमतस्तव फलितमित्यत्राऽऽह—अनृतं त्विति । अपरं दृश्यतया प्रतीयमानं जगत्सकलं परस्य ब्रह्मणो विकृतिस्तु यतः कार्यमतः कारणादनृतं, परं तु ब्रह्मावितथं वितथं न भवतीति । कुत इत्यत्राऽऽह—प्रकृतिस्तु यत इति । कारणं तु यस्मात्तस्मादवितथं सत्यमित्यर्थः । अयं भावः—दृश्यं मनआदि जगदनृतं भवितुमर्हति । कार्यत्वादग्न्यादिवत् । परं ब्रह्म तु सत्यं, कारणत्वादरुणादिवत् । अग्न्यादि त्रितयमसत्यं कार्यत्वाद्रुचकादिवत् । अरुणप्रमुखं त्रितयं सत्यं, कारणत्वात्कनकादिवदिति । ॥ १२६ ॥

**अत एतदसेधि सदुक्ति परं न मृषेति मृषा तु ततोऽन्यदिति ।**
**इति सिद्धमतो यदवादि मया जनिमज्जगदेतदभूतमिति ॥ १२७ ॥**

कारणं सत्यं कार्यमसत्यमिति यस्मात्तस्मात्सद्रुक्कि परं ब्रह्म न मृषा मृषा न भवेत् । ततोऽन्यत्तु मृषा तस्माद्ब्रह्मणोऽन्यत्सर्वं मृषाऽसत्यमित्येतदसेधि सिद्धमतो जानिमज्जगदेतदभूतमिति यत्पूर्वं मयाऽवादि तदिदं सिद्धमित्यर्थः ॥ १२७ ॥

मनसोऽप्यनृतत्वमसेध्यमुतः प्रतिपादितहेतुत एव भवेत् ।
चरितं च तदीयमसत्यमतः परिनिर्मितवारणचेष्टितवत् ॥ १२८ ॥

ननूक्तहेतुना जगतो मिथ्यात्वं भवतु । मनसस्तच्चरितस्य जागरितादेश्च न मिथ्यात्वं सिद्धमिति तत्राऽऽह—मनसोऽपीति । अमुतः प्रतिपादितहेतुत एव मनसोऽनृतत्वमसेधि कार्यत्वहेतुनैव मनसोऽनृतत्वं प्रसिद्धमित्यर्थः । यस्माच्च मनसोऽनृतत्वं तस्मात्तदीयं यच्चरितमवस्थात्रयं तदप्यनृतमेव । तत्र दृष्टान्तमाह—परिनिर्मितेति । यथा परिनिर्मितवारणचेष्टितमसत्यमसत्यधर्मत्वात्तद्वदत्राप्यसत्यधर्मत्वादवस्थात्रयमसत्यमित्यर्थः ॥ १२८ ॥

ननु नाभ्यवदच्छ्रुतिरुद्भवनं मनसस्तु सतो न च खप्रमुखात् ।
कथमस्य भवेदनृतत्वगतिर्मनसो भगवन् वद निश्चयतः ॥ १२९ ॥

ननु मनसः कार्यत्वे सिद्धे मनसोऽनृतत्वं स्यात्तदेव नास्ति । अश्रुतत्वादित्याशङ्कते पूर्ववादी—नन्विति । सतः परमात्मनः सकाशान्मनस उद्भवनं नाभ्यवदत् । खप्रमुखादप्युद्भवनं नाभ्यवदत्तस्मादस्य मनसोऽनृतत्वगतिरसत्यत्वावगतिः कथं भवेत् । भो भगवन् विचार्य वदेति ॥ १२९ ॥

ननु सप्तम आत्मन उद्भवनं मनसोऽभिदधावसुनाऽपि सह ।
कथमस्य भवेदमृषात्वगतिर्मनसो विकृतित्वगुणस्य वद ॥ १३० ॥

छान्दोग्योपनिषदि सप्तमाध्याय आत्मनः सकाशादसुना प्राणेन सह मनस उद्भवनं श्रुतिरभिदधौ यस्मात्तस्माद्विकृतित्वगुणस्य कार्यत्वधर्मकस्य मनसोऽमृषात्वगतिः सत्यत्वावगतिः कथं भवेत् । तस्मात्परमात्मकार्यत्वश्रवणान्मनसोऽनृतत्वमित्यर्थः ॥ १३० ॥

असुना करणैर्गगनप्रमुखैः सह मुण्डक उद्भवनं मनसः ।
पुरुषात्परमात्मन उक्तमतो वितथं मन इत्यवधारय भोः ॥ १३१ ॥

मुण्डकेऽपि मनस उद्भवनं परमात्मनः सकाशाच्छ्रुतमित्याह—असुनेति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' इत्यादिमुण्डकेऽप्यसुना प्राणेन करणैरिन्द्रियैर्गगनप्रमुखैराकाशादिभिश्च

महाभूतैः सह पुरुषात्परमात्मनः सकाशान्मनस उद्भवनमुक्तमिति यतोऽतःकारणादपि मनो वितथमनृतमित्यवधारय निश्चिन्वित्यर्थः ॥ १३१ ॥

**मनसोऽन्नमयत्वमवादि यतस्तत एव हि भूतमयत्वगतिः ।**
**कुशरीरवदेव ततोऽपि भृशं वितथं मन इत्यवधारय भोः ॥ १३२ ॥**

एवं परमात्मकार्यत्वश्रवणान्मनसोऽनृतत्वमुक्तम् । इदानीं भौतिकत्वश्रवणादपि मनसोऽनृतत्वं सिद्धमित्याह—**मनस इति** । 'अन्नमयं हि सोम्य मनः' 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति मनसोऽन्नमयत्वमन्नकार्यत्वमवादि यतस्तत एव कुशरीरवद्भूतमयत्वगतिर्भूतकार्यत्वावगतिः, ततोऽपि मनो वितथमसत्यमित्यवधारयेत्यर्थः ॥ १३२ ॥

**कुरु पक्षमिमं गगनप्रमुखं जनिमत्सकलं नहि सत्यमिति ।**
**प्रथमं चरमं च न चास्ति यतो रुचकादिवदित्युपमां च वद ॥१३३॥**

एवं कार्यत्वहेतुना मनआदिजगतोऽनृतत्वं साधितम् । इदानीमाद्यन्तवत्त्वादित्यनुमानान्तरेणापि मनआदिजगतोऽनृतत्वं साधितव्यमिति शिष्यं शिक्षयति—**कुरु पक्षमिति** । गगनप्रमुखं जनिमत्सकलं जगत्सत्यं न भवतीति पक्षं कुरु प्रतिज्ञां कुरु । तत्र हेतुं कथयति—**प्रथममित्यादिना** । तत्र दृष्टान्तमाह—**रुचकादिवदिति** ॥ १३३ ॥

**कनके रुचकादि न पूर्वमभूच्चरमं च न विद्यत इत्यनृतम् ।**
**अधुनाऽपि तथैव समस्तमिदं जनिमद्वियदादि भवेदनृतम् ॥ १३४ ॥**

कनकरुचकादिदृष्टान्तदार्ष्टान्तिकार्थान्प्रपञ्चयति—**कनक इत्यादिना** । कारणभूते कनके रुचकादि कार्यं प्रथमं नाभूत् । चरमं च न विद्यते । "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा । वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः" इति न्यायात् । अधुना वर्तमानकालेऽपि कनकव्यतिरेकेण रुचकादि न विद्यते यथा तथा जनिमद्वियदादि समस्तं जगदनृतमसत्यं भवेदित्यर्थः ॥ १३४ ॥

**कनकादिषु यद्युपजातमभूद्रुचकप्रमुखं पृथगेव ततः ।**
**अधिकं परिमाणममीषु कुतो न भवेदिति वाच्यमवश्यमिदम् ॥१३५॥**

एवं कनकरुचकादिदृष्टान्तेन कार्यं कारणव्यतिरेकेण नास्तीति स्वसिद्धान्तः समर्थितस्तत्रेयमाशङ्का—कार्यकारणयोरत्यन्तभेदोऽस्त्येव । तयोस्तादात्म्यप्रति(ति)मासस्तु समवायसंबन्धनिबन्धन इति वैशेषिकादय आहुरिति । तां(तान्) प्रत्याह—**कनकादिष्वित्यादिना** । कनकादिषूपजातं रुचकप्रमुखं कनकादेः सकाशात्पृथगेवाभूद्यदि तर्ह्यमीषु रुच-

कादिष्वधिकं परिमाणं गुरुत्वं कुतो न भवेदिति पृष्टे सति कुशलैस्तार्किकैरिदमवश्यं वाच्यमस्य प्रश्नस्योत्तरं वक्तुमशक्यमित्यर्थः ॥ १३५ ॥

कनकप्रभृतेर्व्यतिरिक्तमतो रुचकादि न विद्यत एव कुतः ।
पृथगग्रहणात्कनकप्रभृतेरिति कारणमेव सदन्यदसत् ॥ १३६ ॥

इतश्च कार्यकारणयोर्भेदो न युक्त इत्याह—कनकप्रभृतेरिति । अतो रुचकादिकनकप्रभृतेर्व्यतिरिक्तं न विद्यते । तत्कुत इत्यत्राऽऽह—पृथगिति । कनकप्रभृतेः पृथग्ग्रहणाद्भेदेनादर्शनात् । तस्मात्सदा कारणमेव सत्यमन्यदितरदसत्यमित्यर्थः ॥ १३६ ॥

ननु नाम पृथग्विकृतेः प्रकृतेरथ रूपमथापि च कार्यमतः ।
कथमव्यतिरिक्ततयाऽवगमः प्रकृतेर्विकृतेरिति वाच्यमिदम् ॥ १३७ ॥

ननु तथाऽपि नामरूपाकारैः कार्यकारणयोर्भेद एव युक्त इति शङ्कते पूर्ववादी—ननु नामेति । प्रकृतेः कारणाद्विकृतेः कार्यस्य नाम, अथ रूपमाकारोऽपि पृथगेव कार्यमपि फलमपि पृथगेव यतोऽतः कारणात्प्रकृतेः सकाशाद्विकृतेरव्यतिरिक्ततयाऽवगमः कथं कार्यकारणयोरभेदावगतिः कथमिदं वाच्यं त्वया वक्तव्यम् ॥१३७॥

इह वीरणतन्तुसुवर्णमृदः कटशाटकहारघटाकृतयः ।
उपलब्धृजनैरुपलब्धमतो न भिदाऽस्ति ततः प्रकृतेर्विकृतेः ॥ १३८ ॥

कारणात्कार्यं भिन्नं भवितुमर्हति । नामभेदाद्रूपभेदात्कार्यभेदाच्चेत्येतदनुमानं प्रत्यक्षविरुद्धमित्याह सिद्धान्ती—इह वीरणेति । इह व्यवहारदशायामुपलब्धृजनैर्वीरणतन्तुसुवर्णमृद एव कटशाटकहारघटाकृतयः कटाद्याकारेणोपलब्धा अतः कारणरूपं वीरणतन्त्वादिकमेव कटवस्त्राभरणादिरूपेण दृष्टमिति यतोऽतः कारणादेव प्रकृतेः सकाशाद्विकृतेर्भेदो नास्तीत्यर्थः ॥ १३८ ॥

विकृतिर्यदि नास्ति पृथक् प्रकृतेर्न घटेत भिदाऽप्यभिधाप्रभृतेः ।
इति धीर्विफला तव येन जनैर्विविदे नयनेन मृदाद्यभिदा ॥ १३९ ॥

यथोक्तमर्थं विवृणोति—विकृतिरित्यादिना । प्रकृतेः सकाशाद्विकृतिः पृथङ्नास्ति यदि तर्ह्यभिधाप्रभृतेर्भिदाऽपि न घटेत नामरूपकार्यभेदोऽपि न घटेतेति तव या धीः सा विफला कार्यकारणयोर्भेदसाधिका न भवेत् । कुतो न भवेदित्यत्राऽऽह—नयनेनेति । प्रत्यक्षेण कार्यस्य घटादेर्मृदाद्यभिदा कारणादभेदो जनैर्विविदे विदित इति येन, तेन हेतुना तव धीर्विफला स्यादित्यर्थः ॥ १३९ ॥

**ननु रूपमथो अपि कार्यमथो अभिधाऽपि नटस्य पृथग् विदिता।**
**न पृथक्त्वमुपैति नटः किमिति प्रतिवाच्यमवश्यमिदं कुशलैः ॥१४०॥**

न केवलं तदनुमानं प्रत्यक्षविरुद्धं किंत्वनैकान्तिकं चेत्याह सिद्धान्ती—**ननु रूपमिति**। रूपं च कार्यं चाभिधाऽपि च नटस्य पृथग्विदिता यद्यपि तथाऽपि नटः पृथक्त्वं किमिति नोपैतीति मया पृष्टे सति कुशलैर्भवद्भिरिदमवश्यं प्रतिवाच्यं प्रतिवक्तव्यम्। अस्योत्तरं न शक्यते वक्तुमित्यभिप्रायः ॥ १४० ॥

**असतो न कथंचन जन्म भवेत्तदसत्त्वत एव खपुष्पमिव।**
**न सतोऽस्ति भवः पुरतोऽपि भवाद्यत आत्मवदेव सदिष्टमिति ॥१४१॥**

सदसत्सदसतामुत्पत्त्यसंभवेन कार्यकारणत्वस्य कल्पितत्वाच्च कार्यं कारणव्यतिरेकेण नास्तीत्युत्तरेण कतिपयग्रन्थेनाऽऽह— **असतो नेत्यादिना**। तत्रासदिति वैशेषिकमतं, सदिति सांख्यमतं, सदसदिति दिगम्बरमतम्। तत्र वैशेषिकमतं प्रथमं निराकरोति— **असत इति**। उत्पत्तेः प्रागसतः कार्यस्य न कथंचन जन्म भवेत्। तत्र हेतुमाह—**तदसत्त्वत एवेति**। कार्यस्यात्यन्तमसत्त्वादेव। खपुष्पमिवाऽऽकाशपुष्पवदित्यर्थः। यद्यसतो जन्म न संभवेत्तर्हि सतो जन्मास्त्विति सांख्याः, तन्मतं दूषयति—**न सतोऽस्तीति**। उत्पत्तेः प्रागेव सतो विद्यमानस्य कार्यस्य भवो जन्म न संभवति। कुतो न संभवतीत्यत्राऽऽह—**पुरतोऽपि भवादिति**। उत्पत्तेः प्रागेव सत्त्वादात्मवत्। न तवात्र विप्रतिपत्तिरित्याह— **यत इति**। सत्कार्यं सर्वं सर्वदा सदेवेष्टमिति परमार्थत्वम्। यस्मादेवं तस्मात्सदसतोर्जन्म न संभवतीत्यर्थः ॥ १४१ ॥

**कपिलासुरपञ्चशिखादिमतं परिगृह्य वदेद्यदि कश्चिदिदम्।**
**न कदा चन जन्म वदामि सतः प्रवदामि तु यच्छृणु तत्त्वमपि ॥१४२॥**

सतो जन्म न संभवतीत्युक्तमुपश्रुत्य सत्कार्यवादिनः सर्वे संभूयोत्तिष्ठन्तीति दर्शयति—**कपिलेति**। कपिलासुरपञ्चशिखादिमतं पञ्चशिखशब्देन कश्चित्पूर्वमीमांसक उच्यते। सांख्यचार्वाकमीमांसकानां मतं परिगृह्य कश्चित्सत्कार्यवादीदंशब्देन निर्दिष्टं किमित्यपेक्षायां दर्शयति—**न कदाचनेति**। कदाचन सतो जन्म न वदामि। तर्हि किं वदसीत्यत्राऽऽह—**यत्प्रवदामि** तत्त्वमपि शृणु सावधानमतिर्भवेत्यर्थः ॥ १४२ ॥

**प्रकृतावविशिष्टतया यदभूदधुना तु तदेव विशेषयुतम्।**
**निरवद्यमिदं प्रतिभाति मम प्रवदात्र विरोधमवैषि यदि ॥ १४३ ॥**

अहं यत्प्रवदामि तत्त्वमपि शृणु, इति **यत्सत्कार्यवादिनोक्तं तदिदानीं प्रवदति**—

प्रकृताविति । प्रागेव विद्यमानं यत्कार्यं प्रकृत्यविशिष्टतया कारणेन निर्विशेषतयाऽनुभूतिस्थितं तदेवाधुनोत्पत्तिसमये विशेषयुतं सविशेषमासीदितीदं मतं निरवद्यं मम प्रतिभाति । अत्र विरोधमवैषि यद्यवगच्छसि तर्हि तं विरोधं वद । अस्मिन्मते विरोधो नास्तीति सत्कार्यवादिनोऽभिप्रायः ॥ १४३ ॥

**सदयुज्यत येन गुणेन पुरा प्रकृतौ स इहास्ति न वेति वद ।**
**यदि विद्यत एव पुरा प्रकृतावधुनाऽपि विशेषयुतत्वमसत् ॥ १४४ ॥**

अत्र विशेषं वदेत्युपश्रुत्य सिद्धान्ती विकल्प्य विरोधमाह—**सदयुज्यतेति** । सत्कार्यमुत्पत्तिसमये येन गुणेनायुज्यत युक्तमासीत्स तु गुणः स तु विशेषः पुरोत्पत्तेः प्राक्प्रकृतावस्ति वा न वेति वदेति । प्रथमपक्षे दूषणमाह—**यदीति** । स तु विशेषः पुरा प्रकृतौ विद्यते यदि तर्ह्यधुना विशेषयुतमिति त्वयोक्तमसदयुक्तमित्यर्थः ॥ १४४ ॥

**यदि नास्ति पुरा स गुणः प्रकृतावसदुद्भवनं भवतोऽभिमतम् ।**
**जननेन च सत्त्वमुपात्तवतो जनिमत्त्वत एव विनष्टिरपि ॥ १४५ ॥**

नास्तीति द्वितीयं पक्षं दूषयति—**यदि नास्तीति** । स गुणः स विशेषः पुरा प्रकृतौ कारणे नास्ति यदि, तर्ह्यसदुद्भवनं भवतोऽभिमतं स्यात्सत्कार्यवादिना भवताऽसदुत्पत्तिरङ्गीकृता स्यात् । तथा सति तवापसिद्धान्तः प्रसज्येत । न केवलमसदुत्पत्त्यङ्गीकारः सद्विनाशश्च प्राप्नोतीति दूषणान्तरमाह—**जननेनेति** । जननेन जन्मना सत्त्वमुपात्तवतः कार्यस्य जनिमत्त्वत एवोत्पत्तिमत्त्वादेव विनष्टिरपि प्राप्नोति । सतो विनाशोऽपि त्वयाऽङ्गीकृतः स्यादित्यर्थः ॥ १४५ ॥

**भवतोऽभिमतं परिहर्तुमिदं न कथंचन शक्यत इत्यमुतः ।**
**कणभक्षमतेन समत्वमिदं भवतोऽभिमतं शनकैरगमत् ॥ १४६ ॥**

ननु भवत्वसदुत्पत्तिः सद्विनाशाभ्युपगमश्च तथा सति को विरोध इत्यत्राऽऽह—**भवत इत्यादि** । भवतोऽभिमतमङ्गीकृतमिदमसदुद्भवनं सतो विनशनं च परिहर्तुं कथंचन कथमपि न शक्यमित्यमुतो हेतोर्भवतोऽभिमतमसतो भवनं कणभक्षमतेन कणादमतेन समत्वं साम्यं शनकैरगमच्छनैः शनैः प्राप्तमित्यर्थः ॥ १४६ ॥

**असतो भवनं नशनं च सतः कणभोजिमतं विदितं कविभिः ।**
**उपपत्तिविरुद्धतया सुभृशं वदभाणि मयाऽपि विरुद्धतया ॥ १४७ ॥**

तर्हि कणादमतं किमित्याकाङ्क्षायां तन्मतं दर्शयति—**असत इत्यादि** । प्रागसतः सत्तासमवायो जन्मेत्यङ्गीकारादसतः कार्यस्य भवनमुत्पत्तिः सतो नशनं चेति कणभोजिमतं कविभिः पूर्वाचार्यैर्विदितम् । अस्तु नामेदं कणादमतं ततः किमा-

यातमिति तत्राऽऽह—उपपत्तीति । उपपत्तिविरुद्धतया न्यायविरुद्धतयाऽसतो जन्म सतो नशनं चेत्युभयं सुतरां युक्तिविरुद्धतयाऽभाणि भणितमाचार्यैः । कार्यस्यानिर्वचनीयत्ववादिना मयाऽपि तदुभयं विरुद्धतयाऽभाणि । सदसतोर्जन्मासंभवात्कार्यस्यानिर्वचनीयत्वमेव मयाऽप्युक्तमित्यर्थः ॥ १४७ ॥

**प्रतिषिद्धमिदं कणभोजिमतं हरिणाऽपि समस्तगुरोर्गुरुणा ।**
**वचनेन तु नासत इत्यमुना ब्रुवता च पृथातनयाय हितम् ॥ १४८ ॥**

इतश्च कारणात्कणादमतमयुक्तमित्याह—प्रतिषिद्धमिति । समस्तगुरोर्गुरुणा हरिणा 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यमुना वचनेनेदं कणभोजिमतं प्रतिषिद्धं निरस्तम् । नन्वर्जुनं प्रलोभयितुं हरिणा कणादमतं निराकृतं नतु हितोपदेशं कर्तुमिति चेन्नैवमित्याह—ब्रुवता चेति । पृथातनयाय कुन्तीपुत्राय स्वबान्धवायार्जुनाय स्वभक्ताय हितं ब्रुवता हितोपदेशं कुर्वता हरिणा कणभोजिमतं निरस्तमित्यर्थः ॥ १४८ ॥

**असतश्च सतश्च न जन्म भवेदिति पूर्वमवाद्युपपत्तियुतम् ।**
**सदसच्च न जायत एव कुतो नहि वस्तु तथाविधमस्ति यतः ॥ १४९ ॥**

एवं सदसतोर्जन्म निरस्तमनूद्य दिगम्बरमतं निरस्यति—असतश्चेत्यादि । असतश्च सतश्च न जन्म भवेदिति पूर्वमुपपत्तियुतं युक्तिसहितं मयाऽवादि गदितम् । सदसच्च सदसदात्मकं कार्यं न जायते । तत्र हेतुं पृच्छति—कुत इति । हेतुं कथयति सिद्धान्ती—नहीति । तथाविधं सदसदात्मकं वस्त्वेव नास्तीति यतोऽतस्तस्य जन्मापि दूरोत्सारितमित्यर्थः ॥ १४९ ॥

**सदसत्त्वमतीत्य मनःप्रभृतेर्न कथंचन वृत्तिरिहास्ति यतः ।**
**तत एव मनःप्रमुखस्य भवो न भवेदिति सर्वसुवेद्यमिति ॥ १५० ॥**

सदसत्सदसतामुत्पत्त्यसंभवे पारिशेष्यात्कार्यस्यानिर्वाच्यत्वं सिद्धमित्याह सिद्धान्ती—सदसत्त्वमिति । एकस्य वस्तुनः सदसदात्मकत्वासंभवान्मनःप्रभृतेर्जगतः सदसत्त्वमतीत्य सत्त्वमसत्त्वं चातीत्य कथंचन वृत्तिर्नास्ति प्रकारान्तरेण वृत्तिर्नास्तीति यतस्तत एव मनःप्रमुखस्य जगत उत्पत्तिविनाशश्रवणाच्च जन्मविनाशान्यथानुपपत्त्याऽनिर्वचनीयत्वं सिद्धमित्यर्थः ॥ १५० ॥

**यदि नाम कथंचिदमुष्य भवः सदसत्त्वमपेक्ष्य भविष्यति वः ।**
**अमृषात्वममुष्य तथाऽपि न तु श्रुतिरस्य मृषात्वमुवाच यतः ॥ १५१ ॥**

सदसद्वादिनां दुर्बलत्वमुपलभ्य प्रौढवादेनाऽऽह सिद्धान्ती—यदि नामेति । वो

युष्माकं मतेऽमुष्य मनआदेः सदसत्त्वमपेक्ष्य सदसत्त्वयोरन्यतरं पक्षमपेक्ष्याऽऽश्रित्य कथंचिद्भवो जन्म भविष्यति यदि नाम तथाऽप्यमुष्य मनआदेर्मृषात्वं सत्यत्वं नास्तीति । तत्र हेतुमाह—श्रुतिरिति । 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' 'वाचाऽऽरम्भणं विकारो नामधेयम्' इत्यादिश्रुतिरस्य जगतो मृषात्वमुवाच यतोऽतः कारणान्मनआदेरन्वयव्यतिरेकाभावपरिहारेण शुक्तिकारजतादिवन्मिथ्यात्वमित्यर्थः ॥ १५१ ॥

मनसोऽनृततैवमवादि यतस्तत एव हि तस्य मृषा चरितम् ।
यत एव मृषा मनसश्चरितं तत एव पुरोदितसिद्धिरभूत् ॥ १५२ ॥

मनआदेर्मिथ्यात्वे सिद्धे यत्फलितं तदाह—मनस इत्यादि । श्रुत्या मनसोऽनृतता मिथ्यात्वमवादि यतस्तत एव तस्य मनसश्चरितमवस्थात्रयमपि मृषा भवेत् । मनसश्चरितं मृषेति यतोऽत एव पुरोदितसिद्धिरभूदित्यर्थः ॥ १५२ ॥

यदपेक्ष्य तु नाम भवेत्त्रितयं परमात्मपदस्य तुरीयमिति ।
तदसत्यमसत्यगुणस्तु यतः परिनिर्मितसर्पविसर्पणवत् ॥ १५३ ॥

किं पुनस्तत्पुरोदितमित्यपेक्षायां तद्दर्शयति—यदपेक्ष्येति । त्रितयं यदवस्थात्रयमपेक्ष्य परमात्मपदस्य तुरीयमिति नाम भवेत्तदवस्थात्रयमसत्यम् । तत्र हेतुमाह—असत्यगुणस्तु यत इति । असत्यस्य मनसो गुणोऽवस्थात्रयमिति यस्मादवस्थात्रयमसत्यम् । तत्र दृष्टान्तमाह—परिनिर्मितेति । यथा रज्ज्वामारोपितस्य सर्पस्यासत्त्वात्तद्विसर्पणस्याप्यसत्यत्वं तद्वन्मनसोऽसत्यत्वात्तद्धर्मस्य जागरितादेरप्यसत्यत्वमित्यर्थः । अवस्थात्रयस्य मायामयत्वात्तन्निबन्धनं तुरीयत्वमपि नाममात्रमतो निर्विशेषं प्रत्यक्पदमित्युक्तम् ॥ १५३ ॥

निखिलस्य मनःप्रमुखस्य यतो वितथत्वमवादि पुरा तु मया ।
श्रुतियुक्तिबलेन ततोऽद्वयकं परमक्षरमेव सदन्यदसत् ॥ १५४ ॥

इदानीं परमप्रकृतमुपसंहरति—निखिलस्येति । मनःप्रमुखस्य जगतो वितथत्वं मया पूर्वं श्रुतियुक्तिबलेनावादि । यतोऽतः कारणादद्वयकं परमक्षरमेव सत्यमन्यत्सर्वं कार्यकारणात्मकं द्वैतमसत्यमित्यर्थः ॥ १५४ ॥

यदपूर्वमबाह्यमनन्तरकं न च किंचन तस्य भवत्यपरम् ।
इति वेदवचोऽनुशशास यतो वितथं परतोऽन्यदतः भगवन् ॥ १५५ ॥
प्रतिपिध्य यतो बहिरन्तरपि स्वविलक्षणमात्मन उक्तवती ।
अवबोधघनत्वमतोऽन्यदसल्लवणैकरसत्वनिदर्शनतः ॥ १५६ ॥

ब्रह्मव्यतिरिक्तं सर्वं मायामयत्वादसत्यमित्येतच्छ्रुतियुक्तिभ्यां सिद्धमित्युक्तम् । इदानीं काऽसौ श्रुतिरित्यपेक्षायां ' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ' इत्यादिकेत्याह श्लोकद्वयेन—यदपूर्वमित्यादिना । पूर्वं कारणं तद्रहितमपूर्वं स्वयंसिद्धत्वात्कारणरहितम् । किं चाबाह्यं जात्यादिरहितम् । अनन्तरं नानात्वरहितं यदेवं निर्विशेषं परमात्मपदं तस्यापरं किंचिन्नास्ति । स्वव्यतिरिक्तं किंचिदपि नास्तीत्येवं वेदवचो नुशशासेति यतोऽत एव परतः परस्मादक्षरादन्यदसत्यं वितथमिति प्रगतं प्रकर्षेणावगतमिति । एवं बहिरन्तरप्यात्मनः स्वविलक्षणं सर्वं प्रतिषिध्यावबोधघनत्वं प्रज्ञानघनत्वं लवणैकरसत्वनिदर्शनतः । यथा सलिलकार्यं लवणं सलिलमात्रं तथा परमात्मविवर्तं जगदपि परमात्मैवेत्यात्मनोऽवबोधघनत्वमुक्तवती श्रुतिः । ' अपूर्वमनपरम् ' ' स यथा सैन्धवघनः ' इत्यादिका श्रुतिरात्मनो निर्विशेषत्वमुक्तवतीत्यर्थः ॥ १५५ ॥ १५६ ॥

लवणैकरसत्वसमं भणितं स्वविलक्षणवस्तुनिषेधनतः ।
अवबोधघनं परमात्मपदं त्वमवेहि तदस्मि सदाऽहमिति ॥ १५७ ॥

एवं निर्विशेषतया परिशोधितस्य त्वंपदार्थस्य परिशोधितेन तदर्थेनैक्यमत्र वाक्यार्थ इति कथयति—लवणैकेति । स्वविलक्षणवस्तुनिषेधनत आत्मव्यतिरिक्तवस्तुनिषेधेन लवणैकरसत्वसमं कार्यकारणगन्धरहितमवबोधघनं यत्परमात्मपदं तदहमस्मीति त्वं सदा निरन्तरमवेहि हेयोपादेयबुद्धिरहितः सन्परमानन्दतया तिष्ठेत्यर्थः ॥ १५७ ॥

अणु नो न च तद्विपरीतगुणो न च ह्रस्वमतो न च दीर्घमपि ।
प्रतिषिद्धसमस्तविशेषणकं परमक्षरमात्मतयाऽऽश्रय भोः ॥ १५८ ॥

प्रतिपत्तिसौकर्यार्थं यथोक्तमखण्डवाक्यार्थं प्रपञ्चयति—अण्वित्यादिना । स्थूलदेहधर्माभ्यां ह्रस्वत्वदीर्घत्वाभ्यां रहितं सूक्ष्मशरीरधर्मेणाणुत्वेन रहितं तद्विपरीताकाशादिधर्मेण महत्त्वेन च रहितम् । एवं प्रतिषिद्धसमस्तविशेषणकं निर्विशेषं परमक्षरमात्मतयाऽऽश्रय स्वरूपत्वेनाऽऽश्रयेत्यर्थः ॥ १५८ ॥

असुबुद्धिशरीरगुणान् षडिमानविवेकिजनैर्दृशिधर्मतया ।
प्रतिपन्नतमान् प्रविहाय शनैर्दृशिमात्रमवेहि सदाऽहमिति ॥ १५९ ॥

अनेन श्लोकेन तत्पदार्थप्राधान्येनाखण्डवाक्यार्थं प्रपञ्च्य त्वंपदार्थप्राधान्येन प्रपञ्चयति—असुबुद्धीति । अविद्वज्जनैरविवेकितया दृशिधर्मतया प्रत्यगात्मधर्मतया प्रतिपन्नतमान् षट्संख्याकानसुबुद्धिशरीरगुणानशनापिपासाशोकमोहजरामरणलक्षणां-

ननात्मधर्मतया प्रविहाय हित्वा शनैः क्रमेणावशिष्टदृशिमात्रं केवलं ज्योतीरूपं प्रत्यगात्मानमहमित्यवेहि जानीहीत्यर्थः ॥ १५९ ॥

अहिनिर्ल्वयनीमहिरात्मतया जगृहे परिमोक्षणतस्तु पुरा ।
परिमुच्य तु तामुरगः स्वबिले न पुनः समवेक्षत आत्मतया ॥१६०॥
अविवेकत आत्मतया विदितं कुशरीरमिदं भवताऽप्यहिवत् ।
अहिवत्त्यज देहमिमं त्वमपि प्रतिपद्य चिदात्मकमात्मतया ॥ १६१ ॥

एवमखण्डवाक्यार्थो दर्शितः। इदानीमेवंभूतवाक्यार्थज्ञानं यदा दृढतरं भवति तदा प्रारब्धकर्मभोगपर्यन्तं जीवन्मुक्तिरूपं दग्धरज्जुन्यायेन बाधितानुवृत्त्या द्वैतदर्शनाभासात्परमानन्दैकरूपपरितृप्तिलक्षणं वाक्यार्थज्ञानजं फलं प्राप्तो भविष्यतीति दृष्टान्तेन दर्शयति श्लोकद्वयेन— अहिनिर्ल्वयनीमिति। 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत' इति जीवन्मुक्तश्रुतेः। यथाऽहिः सर्पः परिमोक्षणतः पुरा, अहिनिर्ल्वयनीं भुजङ्गनिर्मोकमात्मतया जगृहे गृहीतवान्, पुनः कालान्तरे स उरगोऽहिनिर्ल्वयनीं कञ्चुकं स्वबिले परिमुच्य पुनरात्मत्वेन न समीक्षते न पश्यति तथा भवताऽपीदं शरीरमन्नमयादिकं कञ्चुकमविवेकत आत्मानात्मविवेकाभावेनाऽऽत्मतयाऽहिवद्विदितं यस्मात्तस्मात्त्वमपि चिदात्मकं वस्तु स्वात्मतया प्रतिपद्य पश्चादहिवदिमं देहं त्यज देहाद्यभिमानं त्यजेत्यर्थः ॥ १६०॥१६१ ॥

रजनीदिवसौ न रवेर्भवतः प्रभया सततं यत एष युतः ।
अविवेकविवेकगुणावपि ते भवतो न रवेरिव नित्यदृशेः ॥ १६२॥

आत्माज्ञानाच्छरीराभिमानः स चाऽऽत्मज्ञानान्निवर्तेत इत्युक्तम्। तर्ह्यात्मनो ज्ञानाज्ञानसंबन्धोऽस्तीत्याशङ्क्य नेत्याह—रजनीत्यादि। रवेः सूर्यस्य रजनीदिवसौ न भवतः। तत्र हेतुमाह—प्रभयेति। एष रविः सततं प्रभया युतो यतोऽतः कारणादस्याहोरात्रे न भवतः। नित्यदृशेस्तवापि ज्ञानाज्ञानगुणौ न भवतः ॥ १६२ ॥

परिशुद्धविबुद्धविमुक्तदृशेरविवेकविवेकविवर्जनतः ।
मम बन्धविमोक्षगुणौ भवतो न कदाचिदपीत्यवगच्छ भृशम् ॥१६३॥

आत्मनि ज्ञानाज्ञानयोरसंभवाद्बन्धमोक्षावपि न संभवत इत्याह—परिशुद्धेत्यादि। परिशुद्धविबुद्धविमुक्तदृशेः सदा शुद्धबुद्धमुक्तस्वभावस्य चिन्मात्रज्योतिषो ममाविवेकविवेकविवर्जनतो ज्ञानाज्ञानविवर्जनतो बन्धमोक्षगुणौ कदाचिदपि न संभवत इति भृशं तात्पर्येणावगच्छ जानीहीत्यर्थः ॥ १६३ ॥

न मम ग्रहणोज्झनमस्ति मया न परेण दृशेरिति निश्चिनु भोः ।
नहि कस्यचिदात्मनि कर्म भवेन्न च कश्चिदिहास्ति मदन्य इति ॥१६४॥

आत्मनि बन्धमोक्षयोरभावेऽपि ग्रहणोज्झने स्वपरकृते संभवत इत्याशङ्कयाऽऽह—न ममेति। दृशेर्विज्ञप्तिमात्रस्य निरवयवस्य मम ग्रहणोज्झनं नास्ति। मयाऽन्येन वोपादानं परिमोचनं वा नास्तीति त्वं निश्चिनु। मम ग्रहणोज्झनं नास्तीत्यत्र हेतुमाह—नहीति। कस्यचिदात्मनि स्वस्मिन्विषयविषयिभावो न भवेत्। एकस्मिन् वस्तुनि कर्तृकर्मविरोधादित्यर्थः। परेणाप्यात्मनि हानोपादाने न स्त इत्यत्र हेतुमाह—न चेति। इह लोके मदन्यः कश्चिदात्मा नास्तीति। तत्र प्रमाणाभावादित्यर्थः॥ १६४॥

अहमस्मि चरस्थिरदेहधियां चरितस्य सदेक्षक एक इति।
न भवेदत एव मदन्य इति त्वमवेहि सुमेध इदं सुदृढम्॥ १६५॥

ननु स्थावरादिब्रह्मान्तेषु शरीरेष्वात्मभेदान्मदन्यः कश्चिदात्मा नास्तीत्येतत्कथं घटत इत्यत्राऽऽह—अहमस्मीति। देहधियां चरितस्याहमेक एव सदा ईक्षकः साक्षी यतः, ततो मदन्यस्याऽऽत्मनोऽनुपलम्भादेव मदन्यः कश्चिदात्मा न भवेदिति हे सुमेध इदं मयोपदिष्टं सुदृढमवेहि॥ १६५॥

गगने विमले जलदादिमतेः सति वाऽसति वा न भिदाऽस्ति यथा।
त्वयि सर्वगते परिशुद्धदृशौ न भिदाऽस्ति तथा द्वयभेदकृता॥१६६॥

तर्हि चरस्थिरदेहादीनि परमार्थतोऽङ्गीकृतानि तथा सति तत्कृतः कश्चिद्विशेष आत्मनोऽपि स्यादित्याशङ्कयाऽऽह—गगन इत्यादि। विमले गगने जलदादिमतेः सति वाऽसति वा यथा भिदा भेदो नास्ति निरवयवत्वात्, तथा परिशुद्धदृशौ त्वय्यपि द्वयभेदकृता द्वैतभेदकृता भिदा नास्तीत्यर्थः॥ १६६॥

अनृतं द्वयमित्यवदाम पुरा व्यवहारमपेक्ष्य तु गीतमिदम्।
अनृतेन न सत्यमुपैति युजां न मरीचिजलेन नदी ह्रदिनी॥१६७॥

द्वयभेदकृतः कश्चित्कदाचिदात्मनो नास्ति विशेष इति ब्रुवता द्वयसद्भावोऽङ्गीकृतः स्यादित्याशङ्कयाऽऽह—अनृतमित्यादि। पुरा बहुभिर्युक्तिभिरेतज्जगदनृतमित्यवदाम उक्तवन्तो वयं यस्मात्तस्माद्व्यवहारमपेक्ष्य प्रपञ्चस्य व्यावहारिकसत्यत्वमपेक्ष्याङ्गीकृत्येदं गीतमित्युक्तम्। यस्मादेवं तस्मादनृतेन द्वैतेन सत्यमात्मवस्तु युजां योगं नोपैति। तत्र दृष्टान्तमाह—न मरीचीति। ह्रदिनी नदी अगाधजला नदी असत्येन मरीचिजलेन यथा युजां नोपैति तद्वदात्माऽप्यसत्येन संबन्धं नोपैतीत्यर्थः॥१६७॥

बहुनाऽभिहितेन किमु क्रियते शृणु संग्रहमत्र वदामि तव।
त्वयि जागरितप्रभृतित्रितयं परिकल्पितमित्यसदेव सदा॥ १६८॥

परिकल्पितमित्यसदित्युदितं मन इत्यभिशब्दितमागमतः ।
उपपत्तिभिरेव च सिद्धमतो भवतोऽन्यदशेषमभूतमिति ॥ १६९ ॥

एवं तावदस्मिन्प्रकरणे समन्वयाविरोधसाधनफलाख्याध्यायार्थचतुष्टयं सविस्तरं वर्णितम् । इदानीं तदेवार्थचतुष्टयं संक्षिप्य कथयति प्रकरणसमाप्तिपर्यन्तेन ग्रन्थेन । तत्र प्रथमं तत्त्वमस्यादिवाक्यानामद्वितीये ब्रह्मणि समन्वयं वक्तुं त्वंपदार्थं परिशोधयति—बहुनेति श्लोकद्वयेन । एवं महता प्रयत्नेनाभिहितेन बहुना किमु क्रियते, किं प्रयोजनम् । ततः कारणादत्र संग्रहं वदामि, उक्तमेवार्थं संक्षिप्य कथयामि । परिशुद्धदृशौ त्वयि जागरितप्रभृतित्रयं मनोधर्ममवस्थात्रयं तत्साक्षिणि त्वयि परिकल्पितमविवेकतः । तस्मादारोपितं सर्वमसदेव सर्वकल्पनाहेतुभूतं मन इत्यभिशब्दितमपि कल्पितं त्वय्यध्यस्तं यतोऽत एवाऽऽगमत उपपत्तिभिरेव च तन्मनोऽसदसत्यमित्युदितमत एव भवतोऽन्यदशेषमभूतमसत्यमिति सिद्धम् ॥ १६८ ॥ १६९ ॥

यदबाह्यमनन्तरमेकरसं यदकार्यमकारणमद्वयकम् ।
यदशेषविशेषविहीनतरं दृशिरूपमनन्तमृतं तदसि ॥ १७० ॥

एवं त्वंपदार्थं परिशोध्य तत्पदार्थं परिशोधयति—यदबाह्यमिति । यदबाह्यं जात्यादिरहितमनन्तरं निरवधिकमेकरसं केवलं चिदानन्दस्वरूपं, यदकार्यमकारणं कार्यकारणास्पृष्टमद्वयकं सजातीयविजातीयभेदरहितं, यदशेषविशेषविहीनतरं कर्तृत्वभोक्तृत्वादिविशेषरहितं, दृशिरूपं प्रज्ञानघनमनन्तं देशतः कालतो वस्तुतश्चापरिच्छिन्नमृतं सत्यं यत्परमात्मपदं तदेव त्वमसीत्येवं प्रत्यगात्मनो ब्रह्मत्वं जानीहीत्यर्थः ॥ १७० ॥

इयदेव मयोपनिषत्सु पदं परमं विदितं न ततोऽस्त्यधिकम् ।
इति पिप्पलभक्ष इवाभ्यवददवशिष्टमतिं विनिवारयितुम् ॥ १७१ ॥

एवमखण्डवाक्यार्थमुपदिश्य गुरुः किं कृतवानित्यपेक्षायामाह—इयदेवेत्यादि । पिप्पलादो यथा सुकेशादीञ्शिष्यान्प्रत्यभ्यवददित्यर्थः । किमर्थमियदेवेत्युक्तवानित्यत्राऽऽह—अवशिष्टेति । गुरुणाऽननुशिष्टां शिष्येणापेक्षितामवशिष्टां मतिं निवर्तयितुमित्यर्थः ॥ १७१ ॥

इतरोऽपि गुरुं प्रणिपत्य जगौ भगवन्निति तारितवानसि माम् ।
अवबोधवरेण समुद्रमिमं मृतिजन्मजलं सुखदुःखझषम् ॥ १७२ ॥

एवं गुरुणोपदिष्टः शिष्यः किं कृतवानित्यपेक्षायां शिष्यो ब्रह्मभावेन जीवन्मुक्तिमात्मानं कृतार्थं दर्शयामासेत्याह—इतरोऽपीति । भो भगवन्मृतिजन्मजलं

सुखदुःखग्रहमिमं संसाराब्धिमवबोधतरेण ज्ञानपूर्वेन संसारोदधौ पतितं मां सुखेन तारितवानसि । एवमितरोऽपि शिष्यो गुरुं प्रणिपत्य जगौ विज्ञापितवान् ॥१७२॥

अधुनाऽस्मि सुनिर्वृत आत्मरतिः कृतकृत्य उपेक्षक एकमनाः ।
ग्रहसन्विषयान्मृगतोयसमान्विचरामि महीं भवता सहितः ॥ १७३ ॥

अधुनेति । अधुना सुनिर्वृतोऽस्मि सर्वदाऽऽत्मरतिरत एव कृतकृत्यः सर्वत्रा-प्युपेक्षकोऽत एवैकमनाः, मृगतोयसमान्मरीच्युदकसमान्विषयान्मनःकल्पितान्ग्रह-सन्भवता सहितो महीं विचरामीत्युक्तवाञ्शिष्यः ॥ १७३ ॥

तव दास्यमहं भृशमामरणात्प्रतिपद्य शरीरधृतिं भगवन् ।
करवाणि मया शकनीयमिदं तव कर्तुमतोऽन्यदशक्यमिति ॥ १७४ ॥

' यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ विद्याप्रसिद्ध्यर्थं कृतघ्नत्वाप-नुत्तये । " इति शिवशासनादाचार्यसकाशाल्लब्धविद्यस्य शिष्यस्य गुरुं प्रत्यवश्यं कर्तव्यं लोकशिक्षार्थं दर्शयति—तव दास्यमित्यादि । यदृच्छाप्राप्तेनाशनासनपा-नादिना शरीरधृतिं प्रतिपद्याऽऽमरणाद्देहपतनपर्यन्तं तव दास्यं भृशं करवाणि करिष्यामि । मया शकनीयं शक्यमिदमेव । अतोऽन्यत्कर्तुमशक्यमात्मज्ञानस्य प्रत्यु-पकारं कर्तुमशक्यत्वात् । इदं दास्यमेव मया कर्तुं शक्यम् । किंच ' सोऽहं भग-वते विदेहान्ददामि मां चापि सह दास्याय ' इति श्रुतेः । यथा पूर्वं याज्ञवल्क्याय तत्त्वोपदेष्ट्रे जनकः स्वराज्यं दत्त्वाऽनन्तरं स्वदेहमपि गुरवे दत्तवान्, तदेव मनसि कृत्वा मयाऽप्येवं कर्तव्यमित्युक्तवानित्यर्थः ॥ १७४ ॥

गुरुशिष्यकथाश्रवणेन मया श्रुतिवच्छ्रुतिसारसमुद्धरणम् ।
कृतमित्थमवेति य एतदसौ न पतत्युदधौ मृतिजन्मजले ॥ १७५ ॥

य एतत्प्रकरणमर्थतो जानाति तस्य संसारनिवृत्तिरेव फलमिति दर्शयति—गुरुशिष्येति । श्रुतिवद्गुरुशिष्यकथाश्रवणेन गुरुशिष्ययोः कथा तत्त्वनिर्णयफला तस्याः श्रवणेन । गुरुशिष्यसंवादरूपेणेत्थं कृतं श्रुतेः सारसमुद्धरणमुपदेशप्रकरणं योऽवैत्यर्थतो जानात्यसौ शिष्यो मृतिजन्मजले संसारोदधौ न पततीत्यर्थः ॥१७५॥

भगवद्भिरिदं गुरुभक्तियुतैः पठितव्यमपाठ्यमतोऽन्यजनैः ।
गुरुभक्तिमतः प्रतिभाति यतो गुरुणोक्तमतोऽन्यरतो न पठेत् ॥१७६॥

गुरुदेवताभक्तियुतानां परमहंसानामस्मिन्प्रकरणेऽधिकार इत्याह—भगवद्भि-रिति । गुरुभक्तियुतैर्भगवद्भिः परमहंसैरिदं प्रकरणं पठितव्यमतोऽन्यजनैरपाठ्यं

साधनचतुष्टयसंपत्तिरहितैरपाठ्यम् । गुरुभक्तिमत एव गुरुणोपदिष्टं प्रतिभाति सफलं भवति । अतोऽन्यरतो विषयेष्वासक्तबुद्धिर्न पठेदित्यर्थः ॥ १७६ ॥

निगमोऽपि च यस्य इतिप्रभृतिर्गुरुभक्तिमतः कथितं गुरुणा ।
प्रतिभाति महात्मन इत्यवदत्पठितव्यमतो गुरुभक्तियुतैः ॥ १७७ ॥

गुरुभक्तिमद्भिरेव संन्यासिभिरिदं पठितव्यमित्युक्तम् । तत्र किं प्रमाणमित्याकाङ्क्षायाम्- 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति श्रुतिरेव प्रमाणमित्याह—निगमोऽपीत्यादि । गुरौ स्नेहबहुमानविश्वासयुक्तस्य महात्मन एव गुरुणा कथितमुपदिष्टमात्मतत्त्वं प्रतिभाति सम्यक्प्रकाशत इत्येवं निगमोऽप्यवददुक्तवान् । तस्माद्गुरुभक्तियुतैः पठितव्यमित्यर्थः ॥ १७७ ॥

येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसंतानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैर्भूषिताः शिष्यसंघाः
सद्यो मुक्तौ स्थितास्तान्यतिपरमहितान्यावदायुर्नमामि ॥ १७८ ॥

गुरुभक्तिप्रसादात्परिसमापितग्रन्थः सन्सद्गुरुभक्तिरेव ज्ञानं प्रत्यन्तरङ्गसाधनमिति दर्शयितुं ग्रन्थान्ते गुरून्नमस्करोति लोकशिक्षार्थम्—येषां धीसूर्येत्यादि । मे मम जननमरणसंतानदोलाधिरूढेर्दोलावदितस्ततः संचारशीलस्य स्वान्तस्य मनसो हेतुर्ध्वान्तमज्ञानं तद्येषां गुरूणां धीसूर्यदीप्त्या बुद्धिसूर्यप्रकाशेन प्रतिहतमभिभूतमेकान्ततोऽत्यन्तं नाशमगमत् । किंच श्रुतिशमविनयैर्भूषिताः शिष्यसंघा येषां गुरूणां पादौ प्रपन्नाः सन्तः सद्योमुक्तौ स्थितास्तान्यतिपरमहितान्यतीनां परमहितान्गुरून्भगवत्पादाख्यान्यावदायुर्नमामि यावज्जीवं नमामीत्यर्थः ॥ १७८ ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशा शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ १७९ ॥

इति श्रीमच्छंकरभगवत्पूज्यपादशिष्यश्रीतोटकाचार्यविरचितं
श्रुतिसारसमुद्धरणाख्यं प्रकरणं संपूर्णम् ॥

---

गुरुभक्तिमन्नारायणभक्तिरध्यात्मज्ञानस्यान्तरङ्गसाधनमिति दर्शयितुं विराड्रूपं नारायणं नमस्करोति—भूः पादावित्यादिना । तं विष्णुं नमामीति योजना । विष्णुं व्यापनशीलम् । त्रिभुवनवपुषं त्रिभुवनमेव वपुर्यस्य तम् । कीदृशी त्रिभुवनरूपतेत्याकाङ्क्षायां विशिनष्टि—भूः पादावित्यादिना । 'पद्भ्यां भूमिः' इति श्रुतेर्यस्य विष्णोः पादौ भूः, यस्योदरं खमाकाशं, यस्यासुः प्राणोऽनिलो वायुः, यस्य नेत्रे चन्द्रसूर्यौ, यस्य कर्णौ दिशः, यस्य शिरो द्यौः, यस्य मुखमपि दहनः, यस्य वास्तव्यं ( वासो ) वसतिस्थानमब्धिः समुद्रः । यस्यान्तःस्थं विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं नानाविधं विश्वं रंरम्यतेऽतिशयेन रमते, तमेतादृशं त्रिभुवनवपुषमीशं नियन्तारं 'सहस्रशीर्षा' इत्यादिश्रुतिसिद्धं मुहुर्मुहुर्नमामि ॥ १७९ ॥

अतिमन्दमुमुक्षूणां तत्त्वयोगप्रसिद्धये ।
तोटकश्लोकटीकेयं रचिता तत्त्वदीपिका ॥

इति श्रीपूर्णात्मयोगीन्द्रशिष्यसच्चिदानन्दयोगीन्द्रेण रचिता तत्त्वदीपिकाख्या तोटकवृत्तिः समाप्ता ॥



# अथ श्रुतिसारसमुद्धरणस्थश्लोकचरणानामकारादिवर्णानुक्रमः ।

| चरणारम्भः । | श्लोकः । | चरणः । | चरणारम्भः । | श्लोकः । | चरणः । |
|---|---|---|---|---|---|
| अणिमादिगुण | ७९ | २ | अनृतत्वमति | ११ | ३ |
| अणिमादिगुणं | ३९ | ३ | अनृतत्वमवा | ४९ | १ |
| अणिमादिगुणो | ७९ | ३ | अनृतत्वमि | १२४ | १ |
| अणुनोत | ११८ | १ | अनृतं त | १९ | ४ |
| अणुमात्र | १९ | २ | अनृतं त्व | १२१ | ३ |
| अत आत्म | १९ | ३ | अनृतं द्व | ११७ | १ |
| अत एत | १२७ | १ | अनृतेन | ११७ | ३ |
| अत एव न किं | ३२ | १ | अन्तःस्थं | १७९ | ३ |
| अत एव न जीवसत | ७४ | ३ | अपकृष्य | १२९ | ३ |
| अत एव न जीवसदा | ८१ | ३ | अपनीय | ९१ | ३ |
| अत एव न द्व | ९९ | ३ | अपनेतु | १९ | ३ |
| अत एव न द्व | ७३ | १ | अपहाय | २० | १ |
| अत एव समा | १२ | ३ | अभिदधा | १३० | २ |
| अत एव हि | ९४ | १ | अभिधान | ११४ | ३ |
| अथ रूप | १३७ | २ | अभिधाऽपि | १४० | २ |
| अथवा त्व | ९१ | १ | अभिहितः प | ३९ | २ |
| अथवा स | ९२ | ४ | अमतं न | ३१ | १ |
| अधिकं परि | १३९ | ३ | अमनस्क | १०९ | १ |
| अधिरोपित | ६२ | ३ | अमहीज | १०२ | ३ |
| अधुना तु | १४३ | २ | अमुना ब्रु | १४८ | ४ |
| अधुनाऽपि त | १३४ | ३ | अमुनाऽस्य | १९ | ४ |
| अधुनाऽपि वि | १४४ | ४ | अमृतत्व | १०१ | १ |
| अधुनाऽस्मि | १७३ | १ | अमृषात्वमपि | १२३ | ३ |
| अनयैव | २९ | ३ | अमृषात्वममु | १११ | ३ |
| अनयोप | १२३ | १ | अयसो | ९८ | १ |
| अनुशाध्युप | ४ | ४ | अरजस्क | १०९ | २ |
| अनृतत्वगु | १२२ | २ | अरुण | १२२ | ३ |

# तत्त्वदीपिकास्थानां श्रुत्यादिवाक्यानामकारादिवर्णानुक्रमः ।

====